॥ श्रीरामजी ॥

# ॥ जैमिनीयन्यायमालावि ॥
# ॥ स्तरः ॥

॥ श्रीमाधवाचार्यविरचितः ॥

॥ श्रीकाशीनिवासिना श्रीगोवर्द्धपालिते
नवहुरसिकजनमनोविनोदाय ॥ ॥


श्रीकाश्यां

॥ स्वकीयहरिहरयन्त्रालये ॥
मुद्रितः

सं॰ १९४४ श्रावणसुक्ल२५ बुधे ॥

अवशिष्टेन स्वराज्यप्रतिपालन प्र रः प्रतिपाद्यते। अमात्येषु अमात्यः प्रभृतिषु पुरुषेषु अयमीदृशस्य यारस्य योग्यो नान्यस्य इत्येवमूहापोह कुशलः। राजसभायामेते तपस्विनः पूज्या विप्रा दक्षिणा भागे उपवेशनीया एते च भू वामभागे इति क्रमं करोति। तत् तत् अमे षु अधिकृतान् पुरुषान् उचितबुद्धि प्रदानेन प्रयोक्तुं निपुणः। समुद्रपर्य्यन्तत्वेनातिबहुलस्य देशस्य उन्नतिः समस्तभोग्यवस्तुसम्पत्तिः। सा च परराष्ट्र निवासिभिः सकलप्राणिभिः श्लाघ्यते। इदं कर्त्तव्यमिदं नेत्येवं र्या कार्य्यविषया स्फूर्त्तिस्त मधि रोऽस्य राज्ञो नित्यः। सर्वत्राप्रतिहतबुद्धित्वात्। गतो निवारितः सतां तपस्विनाम् बधो विघ्नो येनासौ गतसदाबाधः। देशान्तराधिपतीनां राज्ञाम् इतरधीनत्वे नापरप्रेष्यत्वादयं स्वतन्त्रः। जगदीश्वरस्य विद्यातीर्थमुनेर्भगमूर्त्तित्वेनायमीश्वरः। यस्य सभायां गोष्ठीरूपः प्रसङ्गो वेदार्थविषयत्वेन श्रुतिमान्। यदीयं चरितमपि निरन्तरं वेदोक्तरहस्यार्थानुष्ठानरूपत्वेन श्रुतिमत् भव । सोऽयं श्रुतिमत्प्रसङ्गचरितः। एवंविधोक्ता भूपतिः अन्तः परमेश्वरध्याने बहिः प्रजापालने च नित्यं जागति । यथा नीतिशास्त्रोक्तेषु समभेदादिषु अयं कुशलः न सर्वज्ञात् नारत्वात् धर्मशास्त्रोक्तेषु प्रमाणादिप्रसङ्गान्तेषु अध्यायार्थेषु कुशल ।ते च अध्यायार्था उपरि त प्रदर्शयिष्यन्ते। राज्ञः सर्वज्ञत्वं सोपत्तिकं प्रकटयति यद् ब्र प्रतिपाद्यत इत्यादिना। सर्वासूपनिषत्सु प्रतीयमानं यत् परं ब्रह्म तदेव शैवागमेषु सृष्टिस्थितिसंहारतिरोधनानुग्रहलक्षणपञ्चकृत्य सिद्ध्यर्थमीशानतत्पुरुषाघोरवामदेवसद्यो जातलक्षणानां पञ्चानां मूर्त्तीनां प्र प्रसिद्धिं विस्तारं वा प्रगुणयति प्रकटीकरोतीति प्रतिपाद्यते। तत्र तासु मूर्त्तिष्वयं भूपलः स्थितिमूर्त्तिं धत्ते। तस्या मूर्त्तेरात्मनि लसत् वि तीर्थमुनिः कृतस्तस्य जगतोऽनुग्राहिका मूर्त्तिरित्युच्यते। य दयं भूपो वेदान्तोक्तं परं ब्र य गमो महेश्वरस्य स्थितिमूर्त्तिर्यस्माच्च श्रीविद्यातीर्थमुनिस्तदात्मनि संनिधाय प्रकाशते। तस्मात् सर्वज्ञत्वमस्य राज्ञ उत्कर्षे विद्वदङ्गनागोपालमविवादेन प्रतिभासते। उक्तगुणोपेतं

स्य राज्ञो मन्त्रिणं नानापुराणप्रसिद्धदृष्टान्तैर्हितकारितया प्रशंसति
। इन्द्रस्याङ्गिरस इति। चिकीर्षितग्रन्थे श्रद्धातिशयमुत्पादयितुं कर्तृ
गौरवं प्रकटयति॥ श्रुतिस्मृतिसदाचारपालको माधवो बुधः। स्मा
र्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः॥९॥ सर्ववर्णाश्रमानुग्र
हाय पुराणसारपराशरस्मृति ख्या नादिना स्मार्तो धर्मः पूर्वं
ख्यातः। इदानीं द्विजानां विशेषानुग्रहाय श्रौतधर्मव्याख्यानाय प्रवृत्तः
॥ ग्रन्थमादिप्सुर्गुरुमूर्त्युपाधिकं सकलवेदशास्त्रप्रवर्त्तकत्वेनाभ्यो
चितेष्टदेवतारूपं परमेश्वरमादौ नमस्कृत्य श्रोतृप्रवृत्तिसिद्ध्यर्थं विष
यप्रायोजने दर्शयंस्तं ग्रन्थं प्रतिजानीते। प्रणम्य परमा नं श्रीविद्या
तीर्थरूपिणम्। जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम्॥१॥
जैमिनिप्रोक्तानि धर्मनिर्णाय न्यधिकरणानि न्यायाः तेऽस्य ग्रन्थ
स्य विषयः। पठितुं सुशकैः कतिपयैरेव श्लोकैस्तेषां स्फुटीभावः प्र
योजनम्। न्यायमाला संगृह्यत इति ग्रन्थनामनिर्देशपूर्विका प्रतिज्ञा
। तस्य करिष्यमाणग्रन्थस्य प्रकारं दर्शयति॥ एको विषयसन्देहपूर्व
पक्षावभासकः॥ श्लोकोऽपरस्तु सिद्धान्तवादी प्रायेण कथ्यते॥२॥
॥चत्वारोऽवयवा एकश्लोकेनोक्ताः क्वचित् क्वचित्॥ यत्र पि बहु
श्लोकैरुच्यन्तेऽतो न विस्तरः॥३॥ एकैकस्याधिकरणस्य विषयः स
न्देहः सङ्गतिः पूर्वपक्षः सिद्धान्तश्चेति पञ्चावयवाः। तत्र सङ्गतिरन
न्तरमेव व्युत्पादयिष्यमाणेन प्रकारेण प्रत्यधिकरणं स्वयमेवोहि
तुं शक्यते। अवशिष्टानां चतुर्णामवयवानां संग्राहकाः क्वचित् बह
वः श्लोकाः क्वचिदेक इत्यावापोद्वापाभ्यामन्ततः प्रत्यधिकरणं श्लोक
द्वित्वे संख्या पर्य्यवस्यति। अतो बहु इ विभ्यता ग्रन्थगौरवशङ्का
न कर्त्त । तमेव ग्रन्थबाहुल्याभावं स्फुटीकुर्वन् रूपकव्याजेन सुबो
धत्वं दर्शयति। सर्वथापि सहस्रे द्वेनातिक्रामति संग्रहः। मीमांसासा
गरस्तेन क्रीडापुष्करिणी भवेत्॥४॥ श्लोकेन श्लोकाभ्यां श्लोकैर्वा
य सम्भवं न्यायः संगृह्यताम्। सर्वथापि सहस्रन्यायसंग्रहरूपो ग्र
न्थः श्लोकसहस्रद्वयपूर्त्तेर्वामेव समाप्यते। ननु सहस्रद्वयमतिक्राः
मतु भाष्यटीकादीनां बहुत्वाद् दुरवगाहत्वाच्च मीमांसा सागर समाः

त्वमादिर्बाधः। य दशे बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठिते। न प्रयाजाद्यङ्गेनोप र इ दितन्त्वम्। द्वादशे प्रधानस्य पशोरूप। काम्ययानुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्युप र इत्यादि प्रसङ्गः। पादानामसाधारणं विषयं दर्शयति॥

वि र्यं दस्तुतयो नाम चेति च धम्॥
प्रथ यगैः दैश्चतुर्भिर्मानमीरितम्॥८॥

प्रथमे पादे धिरूपं मानमीरितम्। द्वितीयेऽर्थवादरूपम्। अर्थवादो मन्त्र प्युपलक्षकः। तृतीये स्मृतिरूपम्। स्मृतिराचारमप्युपलक्षयति। चतुर्थे उद्भिच्चित्रादिनामरूपम्॥

उपोद् तः कर्मभेदमानं त पवादगौः॥
प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः॥९॥

द्वितीयाध्यायस्य प्रथमे पाद ख्यानमेवापूर्वबोधकमपूर्वसद्भाव इत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः। द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः। तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादः। चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः॥

श्रुतिर्लिङ्गं च दि रोधप्रतिपत्तयः॥
अनारभ्योक्तिबह्वर्थं स्यर्था अष्टपादगाः॥१०॥

तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोध नां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता। द्वितीये लिङ्गम्। तृतीये वाक्यप्रकरणादि। चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधि दिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसदसद्भावः। पञ्चमे प्रतिपत्तिकर्माणि। षष्ठेऽनारभ्याधीतानि। सप्तमे बहुप्रधानोपकारकप्रयाजादीनि। अष्टमे याजमानानि॥

प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता॥
फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः॥११॥

चतुर्थाध्यायस्य प्रथमे पादे प्र नभूतामिक्षादध्यानयनस्य प्रयोजिकेत्यादि प्रधानप्रयोक्तृत्वं विचारितम्। द्वितीये त्वप्रधानम्। वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम्। तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता। चतुर्थे राजसू

यागजघन्याङ्गासद्यूतादिर्विना० ॥
श्रुत्यादिभिः क्रमस्त विशेषो हस्त्यवर्धने ॥
श्रु देर्बलता चेति पञ्चमाध्यायपादगाः ॥१२॥
पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः। द्वि
ये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादि क्र
विशेषः। तृतीये पञ्चप दीनामावर्तनेनैकादश्यमि दिवृद्धि
अदाभ्यग्रहचिति रनावृत्तिरि दिवृद्ध्यभावः। चतुर्थे क्रमनि
मकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः ॥
अधि री तस्य धर्माः प्र निध्यर्थलोपने
दीक्षासत्रं देयवह्नी षष्ठपादेष्वमी स्थिताः ॥१३॥
षष्ठाध्यायस्य प्रथमे पादे कर्माधि रः कर्तुरस्त्यन्यादेर्नास्ति स्त्रिया
स्ति। योऽस्ति स च प सहेत्येवमादिनाधि री निरूपितः। द्वितीये
त्राधिकारि प्रत्येकं कृतस्नं फलम्। दर्शपूर्णमासयोः कर्तैः निय
। काम्यकर्मसमापनीयमित्येवमादयोऽधि रिधर्मा उक्ताः। तृतीये
द्रव्यस्य प्रतिनिधिरस्ति। देवादीनामग्न्यादीनामधि रिणश्च स
सौत्यादिनिरूपणम्। चतुर्थे पदार्थलोपनं विचारितम्। अवत्त
शे स ज्येन यजेत। इडाद्यर्थनाशे सति शेषान्न ग्राह्यमि ति
म्। पञ्चमे लापराधेन चन्द्रादये सत्यभ्युदयेष्टिः प्रायश्चित्त
ज्योतिष्टोमस्ये दयो दीक्षाः। द्वादशाहः द्वादशदीक्षा इत्य दि
रूपितम्। षष्ठे स धि रिणस्तुल्यकल्पा एव। सत्रे विप्रस्यै
त्येवमादिकं चिन्तितम्। सप्तमे पि दिकं नदेयम् ॥ महाभूमि
देयेत्येवमादिर्देयवि रः। अष्टमे लौकिकाग्नो उपनयनहोम
पत्नीष्टिस्तथैवेत्येव च यग्नि विचारः कृतः ॥ .
प्रत्यक्षो तिदेशोऽस्य शेषः साम निरूपणम्
नामलिङ्गा देशौ द्वौ सप्त ध्यायपादगाः ॥१४॥
सप्तमाध्यायस्य प्रथमे पादे समानमितरच्छ्येनेनेत्यादिप्रत्यक्षव
ना देशः। द्वितीये रथन्तरशब्देन गानमात्राभिधायिना गान
वानिदे नमित्येताहशः पूर्वोक्तातिदेशस्य शेषो विचारितः। तृ

ऽग्निहोत्रनाम्नातिदेशः। चतुर्थे निर्वापौषधद्रव्यादिलिङ्गातिदेशः॥

स्पष्टलिङ्गाद  स्य  तं प्रब  द्पबादतः
तिदेशविशे  :  ष्ट  ध्यायपादगाः॥१५॥

अष्टमा  यस्य प्रथमे पादे स्पष्टेन लिङ्गेनातिदेशविशेषः। तद्यथा॥ सौर्य्यचरावतिदेशकानि निर्वापसहितेन देवतानिर्देश एकदेवतात्व मौषधद्रव्यकत्वमि  दीनि स्पष्टान्याग्नेयलिङ्गानि। द्वितीये त्वस्पष्टैर्लि ङ्गैरतिदेशः। तद्य  । वाजिने हविः सामान्येन लिङ्गेन पयोविध्य तोऽतिदिश्यते। तत्र लिङ्गमस्पष्टम्। शीघ्रं तद्बुद्ध्यनुत्पादनात्। तृतीये प्रबलेन लिङ्गेनातिदेशः। तद्यथा। आभिचारिकेष्वाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रिविधेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदैवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः। प्रबलत्वं द्विदैवत्यत्वम्। शब्दोच्चारणमात्रेण सहसा प्रतिभासात्। क्रमस्तु विलम्बितप्रतीत्या दुर्बलः। चतुर्थे दर्विहोमेष्वतिदेशोऽपोद्यते॥

ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः।
नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः॥१६॥

नव  ध्याय  प्रथमे पाद उपोद्घातपूर्वकमूहविचारप्रारम्भः। तत्र प्रयाजादयो धर्माः अपूर्वप्रयुक्ताः। अवघातमन्त्रादिष्वविवक्षितं व्रीह्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः। सवितृश्विपूषशब्दानां विकृतिषु नास्त्यूहः। अग्निशब्दस्यास्त्यूह इत्यादिक ऊहविचारारम्भः। द्वितीये सपरिकरः सामोहः। तृतीये मन्त्रोहः। चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः।

द्वारलोपोऽस्य विस्तारः  र्थ्ये कर्त्वं समुच्चयः।
·प्रहसामप्रकीर्णानि तत्र  ष्टपादगाः॥१७॥

दशमाध्यायस्य प्रथमे पादे बाधहेतुर्द्वारलोपो निरूपितः। तद्यथा। स्वयंकृता वेदिर्भवतीत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन खि  द  नामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपास्य द्वारस्य लोपेनावघातस्य बाधः। द्वितीये संक्षेपेणोक्तस्य द्वारलोप

स्य बहुभिरुदाहरणैर्वि रः। तृतीये ध रणां यैकत्वम्। तद्
य प्रकृतौ ग दिदक्षिणाया विकृपरिक्रयः र्थः। तथा
विकृतिरूपे भूनाम्नि हि धेनुरूपा दक्षि याऽस्तदेव कार्य्यम्। त
तो धेन्वा गवा दिदक्षि विकृतौ चोदव प्र ध्यते। चतुर्थे
नक्षत्रे ष्टिविहिता उपहो म्बोद रैन रिष्टहोमैः सह समुच्चीय
न्त इ दि: समु य:। पञ्चमे षोडशिग्रहः प्रकृतिगामी। सचाग्रयणा
पा देव ग्रहीत इत्यादिर्बाधप्रसङ्गागतो ग्रहादिवि र:। षष्ठे
म न्त्वे गेयमित्यादिर्बाधप्रसङ्गागतः साम विचारः। सप्तमे प ह्नेषु
हविर्भेदः। गृहमेधीयमपूर्वं कर्म दिर्बाधप्रसङ्गागतः प्रकीर्णविचा
रः। अष्टमे नानु याजेष्विति पर्य्युदासो न सोम इत्यर्थ दो रा
त्व इति प्रतिषेध इ दिर्बाधोपयुक्तो नञर्थविचारः॥

उपो त त यो तन्त्र स्य ।

आ पविस्तृतिर्थे द यस्य पादगाः॥१०॥

एकादशाध्यायस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः। द्वितीये त
न्त्रावापौ संक्षेपेणोक्तौ। तृतीये तन्त्रमुदाहरणा हुल्येन प्रपञ्चि
तम्। चतुर्थे तथैवा पः प्रपञ्चितः॥

प्रसङ्गस्तन्त्रिनिर्णीतिः समु यविक ने॥

द्वादशा य दार्था इति पादार्थसंग्रहः॥११॥

द्वादशा यस्य प्रथमे पादे य धर्मा पशुपुरोडाशे प्रसङ्गः। सो
मिकवेदेरुत्तर लीनकर्म प्रसङ्ग इ दि विचारः। द्वितीये सवनी
यपशोस्तन्त्रित्वम्। ननु सवनीय पुरो शानाम्। वि निस्तन्त्रिणी ।
न प्रकृतिः। अन्वारम्भणीया विकृति पि स्यात्। ननु प्रकृतावेवे
दिवि रः। तृतीये सयोः समुच्चयः। धारणानामनुत्वसन्त।
नत्वादीनां समु य इ दिकं धान्येन। यवव्रीह्योर्विकल्प इत्यादि
कं समु नुवाकयुगलयो कल्पं इत्यादिकं प्राधान्येन। या
ज्यानुवाकयोः समु य इत्यादिकं विकल्पो पश्चादन्ते नेत्युभयं चिन्ति
तम्। तदेवं द्वादशाध्यायगतेषु षष्टिसंख्याकेषु पादेषु प्रतिपाद्या
अर्थाः संगृहीताः ननु यथोक्तेभ्यः पादार्थेभ्योऽन्येऽप्यर्था बहवस्तां।

ननु पादेषु विचार्यन्ते। तेषां कथं तत्तत्पादान्तर्भाव इत्याशङ्क्याह॥

उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः।
तत्तत्पादगतत्वेन विचारान्तरमुन्नयेत्॥२०॥

यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः कश्चिदपवादः कश्चित् प्रसङ्गपतितः कश्चिदनुप्रसङ्गपतित इत्येवं पादान्तर्भाव उन्नेयः। ननु सन्त्वेवमध्यायानां पादानां च व्यवस्थिता अर्थाः। तदीयस्तु क्रमः कथमवगन्तव्य इत्यत आह॥

शास्त्रे पूर्वोत्तरीभावोऽध्यायानामभिधास्यते॥
पादानान्तु तमत्रैव लेशाद्व्युत्पादयामहे॥२१॥

एकस्मिन्नध्याये समाप्ते सत्यध्यायान्तरारम्भे तयोरध्याययोः पूर्वोत्तरीभावो वक्ष्यते। प्रथमाध्यायगतानां पादानां पूर्वोत्तरीभाव उदाहृते सति तद्व्युत्पत्त्या पादान्तरेष्वपि तत्सोत्प्रेक्षितुं शक्यतया तमुदाहरति।

विधिः साक्षान्मितिर्धर्मे तस्य शेषोऽर्थवादगीः॥
वेदमूला स्मृतिर्नाम वाक्यांशोऽमीष्वतः क्रमः॥२२॥

जिज्ञास्यत्वेन प्रतिज्ञाते धर्मे विधिवाक्यं साक्षात् प्रमाणमिति तद्विचारः प्रथमे पादे युक्तः। अर्थवादवाक्यस्य विधिद्वारा प्रामाण्यात् विध्यनन्तरभावित्वम्। स्मृतिवाक्यस्य सार्थवादविधिरूपवेदमूलतया प्रामाण्यात् अर्थवादोत्तरभावित्वम्। नामधेयस्य वाक्यैकदेशत्वेन पूर्वोक्तत्रिविधवाक्यविचारोत्तरकालीनत्वम्। अनेन न्यायेनोत्तराध्यायगतपादानां परस्परं क्रम उन्नेयः। इत्थं शास्त्रस्याध्यायानां पादानां च क्रमविशेषविशिष्टानामसाधारणं प्रतिपाद्यमर्थं निरूप्य तन्निर्णयफलं दर्शयति॥

ऊहित्वा सङ्गतीस्तिस्र   या चान्तरसङ्गतिम्॥
ऊहेदाक्षेपद   न्तप्रत्युदाहर   दिकम्॥२३॥

शास्त्रादिप्रतिपाद्यार्थसम्बन्धितयाधिकरणे योजिते सति तस्याधिकरणस्य शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्चेति तिस्र ऊहिता भवन्ति। तद्यथा। प्रथमाध्यायप्रथमपादस्य द्वितीयाधिकरणे धर्मस्य लक्षणप्रमाणराहित्यं पूर्वपक्षीकृत्य तत्सद्भावः प्रतिपादि

ह्वानः। सेयमुत्तराधिकरणेन सह पूर्वाधिकरणस्योपोद्घातसङ्गतिः। प्रथ ध्यायस्य तृतीयपादस्य प्रथमाधिकरणेऽष्ट दिस्मृतेः प्रामाण्यमु म। द्वितीयाधिकरणे सर्ववेष्टनस्मृतेः पूर्ववत् प्राप्तं प्रामाण्यमपोद्यते॥ सेयमप वादसङ्गतिः। अनया दिशा सर्वत्र सङ्गतिरूहनीया। इत्थं सङ्गतीर्व्युत्पा द्य प्रत्यधिकरणं विषयसंशय पूर्वपक्षसिद्धान्ताख्यपञ्चावयवान् संजिघृक्षुः प्रथमाध्यायस्य प्रथमपादे प्रथमाधिकरणं भट्टमतेनारचयति॥

योऽध्येतव्य इत्यस्य विधानस्य प्रयुक्तितः॥
विचारः रभ्य र्भ्यं वेति संशयः॥१॥
अर्थधीहे धीते लौकिकसिद्धावघातवत्॥
नि म नवै तो वेदारम्भो न सम्भवी॥२॥
दृष्टा पूर्ववदत्रास्त्यत्र ज्ञानपूर्वं नियामकम्॥
अर्थनिर्णायकं शास्त्रमत आरभ्यतां विधेः॥३॥

चोदनालक्षणोऽर्थो धर्म इ रभ्याध्वाह्वयं च दर्शनादित्येतदन्तं जैमिनिप्रोक्तं सूत्रजातं धर्मविचारशास्त्रम्। तदेतदस्य प्रथमाधिकरणस्य षयः। स्वा। योऽध्येतव्य इत्यध्ययनविधिरक्षरग्रहणमात्रपर्यवसायीति के न्मन्यन्ते। परे त्वेवमाहुः। अर्थज्ञानरूपदृष्टप्रयोजनायेदमध्ययनं विधीयते। अर्थज्ञानञ्च विचारमन्तरेण न सम्भवति। ततो विधिर्विचारशास्त्रस्य प्रयोजक इति तत्रैवं संशयः॥ इदं विचारशा किं विधिप्रयु नारम्भणीयमुत नारम्भणीयमिति। तत्र अर्थज्ञानायाध्ययनस्य विधिरिति वदन् वादी प्रष्टव्यः। किमत्यन्तम प्राप्तमध्ययनं विधीयते। किंवा पक्षे प्राप्तमवघातवन्नियम्यंत इति। घः। विमतं वेदाध्ययनमर्थज्ञानहेतुः अध्ययनत्वात्॥ भारताध्ययनवत्। इत्यनुमानेनैव विधिनिरपेक्षेण प्राप्त त॥ न द्वितीयः पक्षः। अवघातवन्नियमविधित्वसम्भवात्॥ यथा नखैरवघातेन तण्डुलनिष्पत्तिसम्भवात् पक्षे प्राप्तोऽवघातो विधिनावश्यं कर्त्तव्य इति नियम्यते। तथा लिखितपाठेन गुरुपूर्वाध्ययनेन र्थज्ञानसम्भवात् पक्षे प्राप्तमध्ययनं विधिना नियम

न तैत्तादिनेत्ययं निर्णयो व्याकरणेन निगमेन निरुक्तेन वा न सिध्यति। वि रशास्त्रं तु तेजो वै घृतमिति वाक्यशेषादर्थं निर्णेष्यति। अतो. विचारो वैधः। वेदमधीत्य स्नायादिति शास्त्रं त्वध्ययनस मावर्त्तनयोः पूर्वापरी वसमानकर्तृकत्वे एवाचष्टे तत्वानन्तर्य्यम्। न हि विधिवशादेव विचारशास्त्रमारम्भणीयमिति सिद्धान्तः। अस्मिन्ने धिकरणे गुरुमतमाह॥

अथ पनात् सिद्धेर्नैवास्त्यध्ययने विधिः।
तेनपूर्वोत्तरोपक्षो प्रमाध्यावत्य हेतुभिः॥४॥
विधे ध्यापनं सिध्येद् बालस्यार्थधियं विना॥
तेन निर्विषयं शास्त्रं निष्फलं चेत्युपेक्ष्यताम्॥५॥
ततःआ र्थं धस्य विव नपनोदनात्॥
विष दिसमुत्पादं शास्त्रमारभ्यतां ततः॥६॥

अष्टवर्षं ह्मणमुपनयीत। तमध्यापयीतेत्यध्यापनं विहितम्। न चात्र नियोज्याभावः। आचार्य्यत्वकामिनो नियोज्यत्वात्। उप नयीतेत्य नेना र्थ्यकरणे विहितेनात्मने पदेन नियोज्यविशेषणमाचार्य्यत्वं प्रतीयते। उपनयने यो नियोज्यः स एवाध्यापनेऽपि। तयोरेकप्रयोजनत्वात्। एवञ्च सत्याचार्य्यकर्तृकमध्यापनं माणवककर्तृकेण अध्ययनेन विना न सिध्यतीत्यध्यापनविधिप्रयुक्त्यैवाध्ययनानुष्ठानसिद्धेर्न पृथगध्ययने विधिरस्तु पगन्तव्यः। श्रूयमाणो विधिर्वा क्यं नि तु दृत्वेनाप्युपपद्यते। ततोऽध्ययनविधिमुपजीव्य पूर्वमुपन्यस्तौ पूर्वोत्तरपक्षावन्य वर्णनीयौ। विषयसंशययोस्तु नास्ति विप्रतिपत्तिः। वि र शास्त्रं विषयः। अवैधं वैधं वेति संशयः। तत्र वैधत्व दौ प्रष्टव्यः। विधेयमाचार्य्यकर्तृकमध्यापनं। किंमा व र्थज्ञानमपि प्रयुञ्जीत किंवा पाठमात्रम्। नाद्यः। अन्तरेणाप्यर्थज्ञानमध्यापनसिद्धेः। पाठमात्रे तु विचारस्य विषयो न सम्भव । ततः प्रतीतः सन्दिग्धोऽर्थो विषयः। त सति। य र्थप्रतीतिरेव नास्ति तत्र सन्देहस्य का कथा। निर्णयो विचारस्य फलम्। सोऽ विषयवद् दूरापेतः। अतो विषयप्रयोजनाभावाद्

विचारशास्त्रं नारम्भणीयमिति पूर्वपक्षः। अत्रोच्यते। मानासाध्यापनेना-
र्थावबोधः प्रयुज्यताम्। तथापि साङ्गवेदाध्यायिनो निगमनिरुक्तव्या-
करणोत्थन्यायस्य पौरुषेयग्रन्थेष्विव वेदेऽप्यर्थावबोधः स्वत एव प्रा-
प्नोति। ननु यथा विषं भुङ्क्ष्वेत्यत्र प्रतीयमानोऽप्यर्थो न   वक्षितः। त
था वेदार्थस्याविवक्षायां विषयाद्यभावस्तदवस्थ इति चेत्। न विवक्षा-
या अपनोदितुमशक्यत्वात्। विषभोजनवाक्यस्याप्तप्रणीतत्वेन बाधो
माभूदिति मुख्यार्थस्तत्र परित्यक्तः। वेदे तु कुतो न विवक्षितार्थत्वम्।
विवक्षिते च वेदार्थे यत्र पुरुषस्य सन्देहः स सर्वोऽपि विचारशास्त्रस्य
विषयः। तन्निर्णयः प्रयोजनम्। ततोऽध्यापनविधिप्रयुक्ते नाध्ययने
न न बुध्यमानस्यार्थस्य विचार्यत्वाद् विचारशास्त्रस्य वैधत्वं सिद्ध-
म्। द्वितीयाधिकरणं भट्टमतेनारचयति॥

विचारविषयो धर्मो लक्षणेन विवर्जितः॥
मानेन वाथवोपेत   भ्यामिति विचिन्त्यते॥७॥
लौकि   रहीनस्य तस्य किं नामलक्षणम्॥
मानशङ्का तु दूरेऽत्र प्रत्यक्षाद्यप्रवर्तनात्॥८॥
चोदनागम्य   कारो   र्थत्वे सति लक्षणम्॥
अत एव प्र   णास्त्र चोदनै   त्र तौ कृतः॥९॥

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः। अत एवाहुः मानाधीना मेयसि-
द्धिर्मानसिद्धिश्च लक्षणादिति। सजातीयविजातीयव्यावर्तको व
स्तुगतः कश्चिल्लोकप्रसिद्ध आकारो लक्षणम्। तेन च लक्षणेन त
स्मिन् वस्तुनि सम्भावनाबुद्धौ जातायां प्रमाणं प्रयुक्तः प   णेन तदवग
च्छति। तद्यथा। सास्नादिमती गौरित्युपश्रुत्य चतुष्पात्सु जीवेषु।
तल्लक्षणलक्षितपदार्थमन्विष्येयं गौरिति वस्तुयावगच्छति। एव
स्त्व सत्यलौकिकत्वाद्धर्मस्य नास्ति लक्षणम्। तत्र कुतः प्रमाणप्र
योगः। कथञ्चिद्योगेऽपि न तत्र प्रमाणसद्भावः शङ्कितुमपि श
क्यः। न तावत्तत्र प्रत्यक्षं संक्रमते। धर्मस्य रूपादिरहिते   त्। अत
एव व्याप्तिग्रहणाभावान्नास्त्यनुमानम्। प्रत्यक्षानुमानमूलत्वाच्च शब्द
स्य सङ्गतिग्रहः। ततो व्युत्पत्त्यभावान्नागमोऽपि तत्र प्रवर्तते। न

स्माद् धर्मो लक्षणप्रमाणरहित इति प्राप्ते ब्रूमः। माभूत् चक्षुरादिगम्यो लौकिक आ  रः। न  पि चोदनागम्यः स्वर्गफलसाधनत्वादिलक्षण आ  रोऽस्ति। तेनार्थत्वे सति चोदनागम्योऽर्थो धर्म इति लक्षणं भवति। अर्थो धर्म इ  के ब्रह्मणि चैत्यवन्दनादौ घटादौ चाति  सिः। त इव्यवच्छेदाय चोद  गम्य इत्युक्तम्। तावत्येवोक्ते विधिगम्येऽनर्थफलत्वे ऽनर्थरूपे श्ये  ऽभिचारकर्मण्यतिव्याप्तिः। तद्व्यवच्छेदा  र्थ इत्युक्तम्। यद्यपि श्येनस्य शत्रुवधः फलं न तु नरकः। तथापि तस्य वध  नरकहेतुत्वात् वधद्वारा श्येनोऽनर्थः। न चैवमग्नीषोमीयपशुहिंसाया अपि वधत्वेन नरकहेतुत्वं स्यादिति शङ्कनीयम्। तस्याः त्वङ्गत्वेन क्रतुफल स्वर्गा  तिरेकेण फलान्तराभावात्। यत श्चोदनागम्यत्वे सत्यर्थत्वं धर्मलक्षणम्। अत एव गम्ये धर्मे विधिवाक्यं प्रमाणम्। यद्यपि प्रत्यक्षानुमानयोरविषयो धर्मस्तथापि प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः सम्भवति। तस्माल्लक्षणप्रमाणाभ्यामुपेतो धर्मः। अस्मिन्नेवाधिकरणे गुरुमतमाह ॥

यद्वा जिज्ञास्यवेदार्थः किं मन्त्राद्यवबोधितः ॥
सिद्धार्थोऽप्यथ विध्येकगम्यः कार्यार्थ एव वा ॥१०॥
सिद्धेऽपि पुत्रजन्मादौ व्युत्पत्तेरुपपत्तितः ॥
मन्त्रादिगम्यसिद्धस्य वेदार्थत्वेऽपि का क्षतिः ॥११॥
हर्षहेतु वेहुत्वेन व्युत्पत्तिः पुत्रजन्मनि ॥
दुर्लभा सुलभा कार्ये वेदार्थोऽतः स एव हि ॥१२॥

अथातो धर्मजिज्ञासेत्यत्राथशब्देन कृत स्ववेदाध्ययनानन्तर्यमुच्यते। अतःशब्देन कृत्स्नस्य वेदस्य विवक्षितार्थत्वं हेतुः क्रियते। उक्तवृद्ध्यानुसारेण धर्मशब्दोऽपि कृत्स्न वेदार्थमाचष्टे। ततः सूत्रे वेदार्थो जिज्ञास्य इति प्रतिज्ञा कृता। अत्र संशयः किं मन्त्रार्थवादप्रतीतः सिद्धार्थोऽपि वेदार्थो भवति। किं वा विधिवा  प्रतीतः  र्यार्थ एव वेदार्थ इति। तत्र लो  वगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायेन व्युत्पत्त्यनुसारी वेदार्थो वर्णनीयः। व्युत्पत्तिश्च सिद्धार्थेऽप्यस्ति। पुत्रस्ते जात इत्या  तौ हारव्याहारजन्यं श्रोतुर्हर्षमनुमाय बालो हर्षहे

तो पुत्रज निसंङ्गतिं प्रतिपद्यते। ततो म र्थवादप्रतीतोऽप्यर्थो वे
दार्थ इति प्राप्ते ब्रूमः।पुत्रजन्मकर्म्महेतूनां धन आदीनांबहु दस्य
वाक्यस्य पुत्रजन्मे र्थे इ। निर्णयो दुर्लभः।गामानयेति कोनु॰ग
वानयनरूपां मध्यमवृद्दप्रवृत्तिमवलोक्य सङ्गतिग्रहणं सुलभम्।
तस्मात् र्थरूप एव वेदार्थ ई। ।तृतीयाधिकरणं मदृमतेनारचयति।

धर्मः ज्ञापकं तं यद्दृत्तं चोदः कम्॥
एतत्किंन परीक्ष्यं तर्किं सम्यक्परीक्ष्यतां नाम्॥१३॥
मानोपदेशात्मे य सिद्धः न किंपरीक्ष्य ॥
मैवं विचारः हेऽस्मिन परीक्षीपेक्ष्यते नः॥१४॥
स्पष्टोऽर्थः अस्मिन्ने वाधिकरणे गुरामत ह॥
आदौ परीक्ष्यो वेदार्थश्चोदः मानताय ॥
वेदार्थे प्रधान त्प्रथमं ततपरीक्ष म॥१५॥
चोदः तते त्र प्रथम साध्यता ग ॥
अनपेक्षत त यतो मुख्यत्व श्रितम्॥१६॥

द्वितीयाध्यायार्थैः कर्मभेदशेषशेषित्वादिरूपो वेदार्थः स्तत्र रिण
परीक्षिष्यते।चोदः माणस्य तु प्रथमेऽध्यायेपरीक्षा। तदेतद
यु म। कुतः।वेदार्थस्य प्रधानत्वे दौपरीक्षणीय त। प्रधान
भूतो हि वेदार्थः।पुरुषार्थत्वेनानुष्ठे यत्वात्।प्र णान्तु तद्वोधना
य प्रवृत्तम्।ततच्छेष तया न प्रधानमिति प्रे ब्रूमः। अस्त्वेतु
नोपाधौ वेदार्थ प्र णयोः प्रधानोपसर्जनभावः। प्र णप्रमेयभा
वोपाधौ तु प्र णस्य मुख्यत्वम्।निरपेक्षत्वात्।नहि स्वतः णप
वादिनां मते सापेक्ष प्रा णय स्ति। प्रमेयन्तु स पे म्।
नाधीना मेयसिद्धिरित्यु त्। तदेतन्मुख्यत्व माश्रित्य सूत्र ।
रः प्रमा परीक्षामादौ रिं युज्यते। न्यत्। धान्यंमाश्रि
त्य धर्म रएवादौ त्व नः। अपरीक्षितेन प्र णेन धर्म
सिद्धो तद्विचारस्या सिद्धेः। तदेवमधिकरः त्रये व्युत्।
दनाय द्द कर मतभेद उपन्यस्तः। अ येण भाट्ट
मतमेवोपन्य ते॥ ॥चतुर्थाधि रणंमारचयति॥ ॥

प्रत्यक्षादिभिरप्येष गम्यते विधिनैव वा
अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता॥१७
वर्त्त नैकविषयमक्षं धर्मस्तु भाव्यसौ॥
अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता॥१८॥

अक्षं प्रत्यक्षम्। प्रत्यक्षादीनां प्रमाणा न प्रमेयावभासकत्वम्। नाव द्विवादम्। धर्मे प्रमेयः। असन्दिग्धाविपर्यस्तत्वे सति बुध्यमान त्वात्। घटादिवत्। तस्मात् प्रत्यक्षादिभिरप्येष धर्मो गम्यत इति प्राप्ते ब्रूमः। धर्मस्य प्रमेयत्वेऽपि प्रत्यक्षयोग्यता नास्ति। प्रत्यक्षस्य वर्त्तमान मात्रविषय त्। यस्तु प्रत्यक्षस्यात्यन्तमविषयस्तत्रानुमानादीनां कैव कथा। चित् प्रत्यक्षेण गृहीते व्याप्त्यादौ पश्चादनुमानादीनां प्र वृत्तिः। तस्माद् विधिनैव धर्मो गम्यते॥ षष्ठमाधिकरणमारचयति॥

अबोधको बोधको वा न तावद् बोधको विधिः॥
शक्तेरलौकिके धर्मे ग्रहणं दुर्घटं यतः॥१९॥
समभिव्याहृते धर्मे शक्तिग्रहणसम्भवात्॥
बोधकस्य विधेर्मात्वमनपेक्षतया स्थितम्॥२०॥

यथा धर्मे प्रत्यक्षादीनां प्रामाण्यं नास्ति। तथा विधेरपि नास्ति प्रामा ण्यम्। शक्तिग्रहणपूर्वकं हि प्रामाण्यमप्तवाक्यस्य लोके दृष्टम्॥ शक्तिश्च लोकप्रसिद्धे गवादौ गृह्यते। धर्मस्त्वलौकिकः। अतस्तत्र शक्तिग्रहणं दुर्घटम्। तस्माद् विधेरबोधकत्वान्न धर्मे प्रामाण्यमि ति प्राप्ते ब्रूमः। यथा प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र। मधुकरपदस्यार्थमजानन्नन्यपदार्थमवगत्य तत् समभिव्याहारात् कमल मध्यगते मधुपानं कुर्वति द्द माने भ्रमरे मधुकरशब्दस्य सङ्गतिं गृहीत्वा वाक्यार्थं प्रतिपद्यते। त यो वृष्टि मो यजेते त्यत्र लोकप्रसिद्धार्थवृष्ट्यादिपदसमभिव्याहारादलौकिकभावनायां विधेः सङ्गतिं गृही विधिवा र्थं पुरुषो बुध्यते। तस्मादबोध कत्वलक्षणमप्रमाण्यं नास्ति। नच सं दाभावादप्रामाण्यम्। सम नन्तरभाविप्रतिनियतदृष्टफले द्द दौ संवादः पि सम्भवात् अनियत दृष्टफले चि यागादौ प्रतिनियतं ज न्तस्फलेज्योति

तथा नित्य दूर्णापदद्वारा वेदस्य कारणसापेक्षत्वं नास्ति। तथाप्यग्निहोत्रं। जुहुयात् स्वर्ग इत्य दिवा स्यवाक्यार्थे सङ्गतिग्रहणमपेक्षितम्। ततो नैरपेक्ष्याभावात् ण्यं नास्तीति प्राप्ते ब्रूमः। लोके गामानयेत्या दि पदप्रयोगेषु पदपदार्थयोरेव सङ्गति र्गृह्यते। वाक्यं त्वाकाङ्क्षा यो ग्यता स धिवशात् र्थं प्रतिपादयतीत्यविवादम्। त वेदवाक्य स्यापि प यक दनपेक्षत्वेन प्रामाण्य मविरुद्धम्॥ ॥

अष्टमाधिकरणमारचयति ॥

पौरुषेयं न वेदः स्यात् पौरुषेयता ॥
ठ दिस ख्यानाद्वा त्वाद्वान्यवाक्यवत्॥२५॥
स प त्वेन वाक्यत्वं तु पराहतम्॥
तत् त्रेनुपलम्भेन स्यात्ततोऽपौरुषेयता॥२६॥

काठकं कौथुमं तैत्तिरीयकमित्यादि समाख्यानम् तद्वद्विषया लोके दृष्टाः। तद्धित प्रत्ययश्च तेनप्रोक्तमित्यस्मिन्नर्थे वर्त्तते। तथा सति व्यासे न प्रोक्तं वैयासिकं भारतमित्यादाविव पौरुषेयत्वं प्रतीयते। किञ्च। वि मतं वेदवाक्यं पौरुषेयम्। वाक्यत्वात्। कालिदासादिवाक्यवदिति। प्राप्ते ब्रूमः। अध्ययन सम्प्रदाय प्रवर्त्तकत्वेन समाख्योपपद्यते॥ कालिदास दिग्रन्थेषु ततसर्गावसाने कर्त्तार उपलभ्यन्ते। तथा वेदस्यापि पौरुषेयत्वे तत् कर्त्तोपलभ्येत न चोपलभ्यते। अतो वा क्यत्वहेतुः प्रतिकूलतर्क पराहतः। तस्माद पौरुषेयो वेदः। तथा सति पुरुषबुद्धि दोषकृतस्या प्रामाण्यस्यानाशङ्कनीयत्वाद्विधिवाक्यस्य ध र्मे प्रामाण्यं सुस्थितम्। इति माधवीये जैमिनीयन्यायमाला विस्तरे॥ प्रथमाध्याय प्रथमः पादः॥ ॥

॥ द्वितीयपादस्य प्रथमाधिकरणमारचयति ॥

वायुर्वा इत्येवमादेरर्थवादस्य मानता॥
न विधेयेऽस्ति धर्मे किं किंवासौ तत्र विद्यते॥१॥
ध्यर्थ दशब्दानां मिथोऽपेक्षा परिक्षयात्॥
नास्त्येक क्यता धर्मे प्रामाण्यं सम्भवेत् कुतः॥२॥
विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः॥

तेनैकवाक्यता तस्माद्वादानां धर्ममानता ॥३॥

काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते। वायव्यं श्वेतमालभेत भूतिकाम
इति विधिः। वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधाव-
ति स एवैनं भूतिं गमयतीत्यर्थवादः। तत्र विधिवाक्यगता वाय-
व्यादिशब्दा अर्थवादशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधति। अर्थवा-
दशब्दाश्चेतरनैरपेक्ष्येणैव भूतार्थमन्वाचक्षते। क्षिप्रगामी वायुः स्वो-
चितेन भागेन तोषितो भागप्रदायैश्वर्य्यं प्रयच्छतीत्युक्ते रामायणभा-
रतादाविव वृत्तान्तः कश्चित् प्रतीयते। नत्वनुष्ठेयं किञ्चित्। अत एक-
वाक्यत्वाभावान्नार्थवादस्य धर्मे प्रामाण्यमिति प्राप्ते ब्रूमः। माभूत्
पदैकवाक्यता। वाक्यैकवाक्यता तु विद्यते। विधिवाक्यं तावत् पुरुषं
प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते। अर्थवादवाक्यञ्च फलवदर्था-
र्थावबोधपर्य्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपे-
क्षते। ततः पुरुषार्थपर्य्यवसितविध्यपेक्षितप्राशस्त्यलक्षणात्तत्त्वा
समर्पयदर्थवादवाक्यं विधिवाक्येन सहैकवाक्यतामापद्यते। यतः क्षि-
प्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता। ततः प्रश-
स्तमिमं वायव्यं पशुमालभेतेति वाक्ययोरन्वयः। तस्मादर्थवादो ध-
र्मे प्रमाणम्॥ अस्मिन्नेवाधिकरणे मतान्तरमनुसृत्य पूर्वोत्तरपक्षावाह॥

वादोक्तहेत्वपेक्षत्वान्न विधेर्मानतेति चेत्॥
सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ॥४॥

यतो वायुः क्षिप्रमेव फलप्रदः। अतो वायव्यमालभेतेत्येवमर्थवादोक्त-
हेतुमपेक्ष्य विधिः पुरुषं नियुङ्क्ते। ततः सापेक्षत्वादप्रामाण्यमिति पू-
र्वपक्षः। विमतं कर्मानुष्ठेयम्। फलप्रददेवतोपेतत्वात्। राजसेवादिवदि-
त्यनुमानं यद्यर्थवादे विवक्ष्येत। तदानीमागमप्रमाणस्य विधिवाक्य-
स्यानुमानान्तरसापेक्षत्वं स्यात्। नत्वेवं विवक्षितम्। किन्तु फलप्रददेव-
तातोपकत्वोपन्यासमुखेन कर्मप्राशस्त्यमुपलक्ष्यते। तथा सति प्र-
शस्तं कर्मानुष्ठेयमित्यस्मिन्नर्थे सार्थवादस्य विधेः पर्य्यवसानादेक-
वाक्यता लभ्यते। तत् कुतः सापेक्षत्वम्। तस्माद् विधिः प्रमाणमिति
राद्धान्तः। द्वितीयाधिकरणमारचयति॥ ॥

ऊर्जोऽवरुद्ध्या इत्येष विधिवन्निगदो न किम्॥
यूपौडुम्बरतां स्तौति स्तौति वा नहि विधित्सया॥५॥
चतुर्थ्या फलतालाभाद् यूपौडुम्बरताफलम्।
ऊर्जोऽवरोधं कथयन् कथं स्तुतिपरो भवेत्॥६॥
अस्तुतौडुम्बरत्वस्याविधानात् कस्य तत्फलम्॥
अर्थद्वैधे वा भेदस्तेन स्तावक एव सः॥७॥

इदमाम्नायते। औडुम्बरो यूपो भवत्यूर्ग्वा उडुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽव इति। अमृतशब्दाभिधेयोऽत्यन्तसारभूतः सूक्ष्मोऽन्नरस ऊर्गुच्यते। उडुम्बररूपयोर्जा यजमानार्थमध्वर्युः पशुरूपामूर्जमाप्नोति। ततो यूपस्यौडुम्बरत्वमूर्जः सम्पादनाय सम्भवतीत्यर्थः। अत्रावरु इति तादर्थ्ये चतुर्थी। तया फलत्वं गम्यते। धनलाभाय राजसेवे दौ तादर्थ्यदर्शनात्। न च फलपरस्य वचनस्य वकत्वं युज्यते। अन्य स्वर्गकाम इत्यस्यापि ज्योतिष्टोमस्तावकत्वप्रसङ्गादिति ब्रूमः। य ऊर्जोऽवरोधः कस्य फलम्। किमविहितस्यौडुम्बरत्व उत विहितस्य। नाद्यः। अत्र तमन्त्रेण द्रव्यमात्रात्। फल नुत्पत्तेः। द्वितीये किं मन्त्रविधिः प्रत्यक्ष उतोन्नेयः। नाद्यः औडुम्बरो यूपो भव त्यत्र लिङ् प्रत्यया श्रव त्। द्वितीये तु समुन्नेयः। न चात्र स्तु भङ्गीं करोषि। अथोच्येत। विधिना यूपौडुम्बरत्वं स्तूयते। ततफलं व ध्यत इति तर्हि वा भिद्येत। ततः फलविधिवन्निगद्यमानमप्येतद्वाक्यं स्तावकमेव। अत्रैव गुरुमतेनपूर्वोत्तरपक्षावाह

मोतौ विधित्वस्य वादत्वस्याप्यनिर्णयात्॥
नप्र चोदनेत्ये तन्न वादो ह्येकवाक्यतः॥८॥

ऊर्जं पशूना तीत्येतस्यापूर्वार्थ द् विधित्वं प्रतिभासते। लिङ्अद्यभावादर्थवादत्वम्। अतः सन्दिग्ध त्वप्रामाण्यं चोदनाया इति पूर्वपक्षः। एक वाक्यत्वलाभेनार्थवादत्वं निर्णीयते अतः प्रमाणं चोदनेति राद्धान्तः। तृतीयाधिकरणमारचयति॥ ॥

तेन त्वमिति प्रोक्तौ द्वौ हेतुरुत स्तुतिः॥
हिः श्रु हेतुतातः शूर्पादन्य धनम्॥९॥

शूर्पसाधनता श्रौती नाश्रौतैः सा विकल्प्यते ॥
अतो निरर्थको हेतुः स्तुतिस्तस्मात् प्रवर्त्तते ॥१०॥

इदमाम्नायते। शूर्पेण जुहोति तेन ह्यन्नं क्रियते इति। अयमर्थवादो विधेये शूर्पे हेतुत्वेनान्वेति। हिशब्दस्य हेतुवाचित्वात् यस्मादन्नसाधनं तस्माच्छूर्पेण होतव्यमित्युक्ते यद्यदन्नसाधनं दर्वीपिठरादि तेन तेन सर्वेण होतव्यमिति लभ्यते। ततः पिठरादयः शूर्पेण सह विकल्प्यन्त इति प्राप्ते ब्रूमः। शूर्पे होमसाधनत्वं श्रौतम् तृतीयया तदवगमात्। पिठरादीनां त्वानुमानिकम्। अतोऽसमानबलत्वान्न कल्पो युक्तः। ततो हेतुर्व्यर्थः। स्तुतिस्तु प्ररोचनायोपयुक्ता। तस्मात् स्तुतित्वेनान्वयः। चतुर्थाधिकरणमारचयति॥ ॥

मन्त्रा ऊरु प्रथस्वेति किमदृष्टैकहेतवः॥
यागेषूत पुरोडाश प्रथनादेरभासकाः॥११॥
आ शोनापि तज्ज्ञानान्मन्त्राः पुण्यैकहेतवः॥
नत न दृष्टत्वाददृष्टं वरमदृष्टतः॥१२॥

ऊरु प्रथस्वेत्ययं कश्चिन्मन्त्रः। तस्यायमर्थः। भोः पुरोडाश। त्वमुरु विपुलता यथा भवति तथा प्रसरेत्येवमादयो मन्त्रा यागप्रयोगेषूच्चार्य्यमाणा अदृष्टमेव जनयन्ति। तदर्थप्रकाशनस्य तद्व्राह्मणम् पुरोडाशप्रथनलक्षणस्यार्थस्य ब्राह्मणवाक्येनापि प्राप्तत्वात्। उरु प्रथस्वेति पुरोडाशं प्रथयतीति हि ब्राह्मणवाक्यम्। नैतद्युक्तम्। अर्थप्रकाशनस्य दृष्टप्रयोजनस्य सम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात्। तस्माद्दृश्यमानार्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्। ब्राह्मणवाक्येनाप्यर्थानुस्मरणसम्भवे मन्त्रेणैवानुस्मरणीयमिति यो नियमस्तस्य त्वदृष्टं प्रयोजनमस्तु। अत्रैव मतान्तरेण पूर्वोत्तरपक्षावाह॥

मन्त्रलिङ्गाद्वाक्याद्वा कल्प्यो विनियोजनं॥
न मन्त्रलिङ्गसिद्धार्थमनुवक्ति तदर्थतः॥१३॥

अस्य मन्त्रलिङ्गेन विनियोगो ब्राह्मणमन्त्रवक्तिनार्थस्यात्। वाक्येन विनियोगे मन्त्रलिङ्गेन वक्ष्यते इत्युभयोर्विरोधादप्रा

माएवं चोदनाया इति पूर्वपक्षः। नायं विरोधः।प्रबलेन लिङ्गेन विनियोगसिद्धौ वाक्यस्यानुवादकत्वादिति राद्धान्तः॥

इति माधवीये जैमिनीय न्याय मा विस्तरे॥
प्रथमाध्यायस्य द्वितीयः पादः॥

तृतीय पादस्य प्रथमाधिकरण मारचयति॥
अष्टकादि स्मृतेर्धर्मे न त्वं न थ॥
निर्मूल माने सा वेदार्थोक्तौ निरर्थ ॥१॥
वैदिकैः स्मर्य्य ण न सम्भा वेदमूलता॥
विप्रकीर्णार्थ संक्षे न सार्थ दृत्तिमानता॥२॥

अष्ट कर्त इ दि स्मृति नधर्मे प्रमाणम्। पौरुषेयत्वे सति मूल प्रमाण रहितत्वात्। विप्रलम्भक वाक्यवत्। थ मूलप्रमाणवत्त्वाय वेदार्थ एव स्मृतिभिरुच्यते इति मन्ये । तर्हि वेदेनैव तदर्थस्याधिगत दियं स्मृ रनर्था स्यात् तदानीमनुवादकत्वादप्रमाणयमिति प्राप्ते ब्रूमः। विमता स्मृतिर्वेदमूल । वैदिकम दिप्रणीतस्मृति त्। उपनयनाध्यय दिस्मृतिवत्। नच वैयर्थ्यं शङ्कनीयम्। अ दादीनां प्रत्यक्षेषु परोक्षेषु नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यै कत्र संक्षिप्यमाणत्वात्। तस्मादियं स्मृतिर्धर्मे प्र णम्॥

अस्मिन्नेव मतान्तरेण पूर्वोत्तर पक्षा वाह॥
नमा स्मार्तोष्टकाङ्क द्यांज इति मन्त्रगीः
तत्र स्मृतेर्मूलवेदेऽनुमिते मात्वसम्भ त्॥३॥

यां जनाः प्रतिनन्दन्तीत्ययं मन्त्रोऽष्टका ङ्कः इम्। तच्च आङ्ग र्तम्। न हि तस्य प्रतिपादकं वेदवाक्य मुपलभामहे। न दिदं मन्त्रवाक्यं न धर्मे प्रमाणमिति चेत्। न। तन्मूलस्य वेद नुमेय त्। अनुनत्व दर्शितम्। तस्मादसौ मन्त्रो धर्मे प्रमाणम्॥

द्वि धिकरण रचयति॥
औदुम्बरी वेष्टनी सर्वेत्येषा स्मृतिर्मितिः॥
अ तिर्वेति सन्देहे मितिः दृष्ट दिवत्॥४॥

औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः ॥
विरोधान्मूलवेदस्याननुमानाच्च मानता॥ ५॥

ज्योतिष्टोमे सदोनामकस्य मण्डपस्य मध्ये काचिदौदुम्बरी शा नि खन्यते। तस्याश्च वाससा वेष्टनं स्मर्यते। औदुम्बरी सर्वा वेष्टयितव्येति सापूर्वन्यायेन प्रमाणमिति प्राप्ते ब्रूमः। औदुम्बरीं स्पृष्ट्वोद्गायेदित्यनेन प्रत्यक्षवेदवचनेन स्पर्शो विधीयते। न च सर्ववेष्टने स्पर्शः सम्भवति। अतो मूलवेदानुमानं कालात्ययापदिष्टम्। तस्माद् विप्रलम्भकवाक्यवन्निर्मूला स्मृतिरप्रमाणम्॥ अत्रैव मतान्तरमाह ॥

प्रत्यक्षानुमितश्रुत्योर्यद् वाव्याघातदर्शनात्॥
अमानत्वे शङ्किते वाधोऽनुमानस्यात्र वर्ण्यते॥ ६॥
परप्रत्यक्षवेदोऽस्त मूलं वेद् वेष्टनस्य तत् ॥
अस्त्वेवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः॥ ७॥

स्पर्शसर्ववेष्टनविषययोः प्रत्यक्षानुमितयोः श्रुत्योः परस्परविरोधादुभयोरप्रामाण्यमिति पूर्वपक्षः। अनुमानस्य कालात्ययापदिष्टत्वेन विरुद्धश्रुत्यभावेन स्पर्शश्रुतिः स्वार्थे प्रमाणम्। अथ पुरुषान्तरप्रत्यक्षवेदः सर्ववेष्टनस्मृतेर्मूलमित्युच्यते। तर्हि माभूत्त प्रामाण्यम्। तथापि परप्रत्यक्षात् स्वप्रत्यक्षस्याभ्यर्हितत्वेन स्पर्श एवानुष्ठेयो न सर्ववेष्टनम्॥ तृतीयाधिकरणमारचयति ॥

वैसर्जनाख्यहोमीयवासो ग्रहणसंस्मृतिः॥
प्रमा न वा श्रुत्यबाधात् प्रमा स्यादष्ट दिवत्॥ ८॥
दृष्टलोभैकमूलत्वसम्भवे श्रुत्यकल्पनात्॥
सर्ववेष्टनवद्बाधहीनाप्येषा नहि प्रमा॥ ९॥

ज्योतिष्टोमेऽग्नीषोमीयस्य पशोस्तन्त्रे प्र ते वैसर्जनहोमो विहितः। तत्र यजमानं पत्नीं पु श्च भ्रातृंश्चाहतेन वाससा संछाद्य ससोऽन्ते स्रुग्दण्डमुपनिबध्य जुहोति। तस्मिन्वासस्येवं र्यते। वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णातीति सेयं स्मृतिः सर्ववेष्टनस्मृतिवत् प्रत्यक्षश्रुत्या न बाध्यते। ततोऽष्टकादिस्मृतिवत् प्रमाणमिति प्राप्ते ब्रूमः। कदाचित् कश्चिदध्वर्युर्लोभादेतद्वासोज हृ॥

नन्मूलेनैवेषा स्मृतिरित्यपि कल्पना सम्भवतीति। दृष्टानुसारिणी चे
यं कल्पना। दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात्। तथा
सत्यस्याः स्मृतेरन्यथाप्युपपन्नत्वाद्वस्त्रकादिवन्न मूलश्रुतिः कल्पयि
तुं शक्यते। अतो बाधाभावेऽपि मूलवेदाभावान्न प्रमाणम्। चतु
र्थाधिकरणं भाष्यमतेनारचयति॥

आचान्ते नैत्यमावां स्मृतिरेषा न मा भवेत्॥
वेदं त्वेति यः श्रौतः क्रमस्तेन विरोधतः॥१०॥
आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः॥
धर्मस्य धर्म्यपेक्षत्वादबाधादस्ति मानता॥११॥

क्षुत आचामेदिति विहितं पुरुषार्थमाचमनम्। यदा तु मध्ये क्षुता
दिनिमित्तं प्राप्नोति॥ तदा नैमित्तिकमाचमनं क्रत्वङ्गत्वेन स्मृत्या
विधीयते। आचान्तेन कर्तव्यमिति सेयं स्मृतिर्न प्रमाणम्। कुतः।
विरुद्धत्वात्। वेदं त्वा वेदिं करोतीति श्रुतौ पूर्वकालवाचिना क्त्वा
प्रत्ययेन मः प्रतीयते। वेदो नाम दर्भमयं सम्मार्जनसाधनम्
। वेदिराहवनीयगार्हपत्यमध्यवर्तिनी चतुरङ्गुलखाता भूमिः
। तयो र्मध्ये यदा क्षुतादिनिमित्तमाचमनं कुर्यात्। तदा श्रुत्यु
क्तं नैरन्तर्यं विच्छिद्येत। तस्माद्वेष्टास्मृतिवदाचमनस्मृतिर्न
प्रमाणमिति प्राप्ते ब्रूमः। वेदवेद्यादि॥ श्रुत्युक्तपदार्थवदाचमना
दयः स्मृत्युक्ता अनुष्ठेयपदार्थाः। क्रमस्तु पदार्थनिष्ठो धर्मः। स
च पदार्थानुपजीवति। तत उपजीव्यविरोधात् क्रम एव बाध्य
ते। न तु क्रमेणाचमनस्य बाधोऽस्ति तस्मादियं स्मृतिः प्रमाणम्॥
अस्मिन्नेव वार्तिककारः प्रकारान्तरेण विचारद्वयं चकार। तत्र
प्रथमं विचारं दर्शयति॥

शाक्योक्ताहिंसनं धर्मो न वा धर्मः श्रुतत्वतः॥
न धर्मो नहि पूतं स्याद्गोक्षीरं श्वदृतौ धृतम्॥१२॥

ब्रह्मचर्यमहिंसां च परिग्रहं च सत्यं च यत्नेन रक्षेदिति। श्रुतावहिं
सादिर्धर्मत्वेनोक्तः स एव धर्मः शाक्येनाप्युक्तः। तस्मात् शाक्यस्मृति
र्धर्मे प्रमाणमिति चेत्। न। स्वरूपेण धर्मस्यापि गोक्षीरन्यायेन शा

कासम्बन्धे सत्यधर्मत्वप्रसङ्गात्। तदीयग्रन्थेनाहिं द्विनीयगान्नाध्यः
तस्मान्नसा धर्मे प्रमाणम्। विचारान्तरं दर्शयति॥

सदाचारोऽप्र वा निर्मूल इ न॥
अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता॥२३॥

होलाकोत्सवादिसदाचारस्य मूलभूतवेदाभावादप्रमा एप ति। चेत्। न। वैदिकैः शिष्टैः परिगृहीतत्वेनाष्ट दिवत्वेदमूल त्। अतएव मन्वादिभिर्ग्रन्थगौरवभयाद्विशे ि तुपदिष्टोऽपि। सदाचारः सामान्याकारेणोपदिष्टः। श्रु ःस्मृ ःसदा र इत्येवं धर्मे प्रमाणोपन्यासात् तस्माच्छिष्टाचारःप्र म। पञ्च ।-धिकरणमारचयति॥

यवादिशब्दाः किं र्थाणे र्यम्लेच्छसाम्यतः।
दीर्घशूकप्रियंग्वाद्यादयेऽप्यर्थविकल्पि ः॥२४॥
य न्याद्वृति शास्त्रस्थ प्रसिद्धिस्तु बलीयसी॥
शास्त्रीयधर्मे तेनात्र प्रियंग्वादिर्न गृ ते॥२५॥

यवमयश्चरुर्भव । वाराही उपानहावुपमुञ्चत इ। श्रूयते। तत्र। यवशब्दमार्या दीर्घशूकेषु प्रयुञ्जते वराहशब्दं च शूकरे। म्लेच्छास्तु यवशब्दं प्रियङ्गुषु वराहशब्दं कृष्णश नौ। तथा स लौकव्यवहारेणानिश्चेतव्येषु शब्दार्थेष्वार्यम्लेच्छप्रसिद्धोः स नबलत्वादुभयविधा अप्यर्था विकल्पेन ग्ना र्या इ से प्राप्तः। शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी। प्र सत्र दवि-च्छिन्नपारम्पर्यागत । स्त्रि चयवविध्यर्थ इ एवं श्रूयते। य ओषधयो म्लायन्ते। अथैते मोदमा इवोत्तिष्ठ । इतरौषधिवि श लेऽभिवृद्धिर्दीर्घशूकेषु दृश्यते। न ।-प्रियङ्गुषु। ते मितरौषधिपा त् पूर्वं पच्य न त्। उपानद्विध्यर्थे इ ै वं भवति। वराहं गावोऽनुधावन्तीति ग मा-नु वनं शूकरे सम्भवति। नतु ष्णशकुनौ। न दीर्घशूवदियवादि र्थः। भा तिकारः पीलुः ब्दमुदाजहार। तं च म्लेच्छा हस्तिनि प्रयुञ्जते। र्यास्तु वृक्षे। तत्रा वृत्तेव्यव

हारस्यार्थेषु सम्भवाद्धृक्ष एव पीलुशब्दार्थः। अस्मिन्नेवाधिकरणे गुरुमतमा
ह॥ यवाद्यर्थानिर्णयेन तद्वाक्यं न प्रमेति चेत्॥
न बलित्वेन तत्प्रसिद्धार्थनिर्णयात्॥१६॥
स्पष्टोऽर्थः॥ अस्मिन्नेवाधिकरणे वार्त्तिककारमतेन वर्णकान्तरमारचयति॥
येमातुलविवाहादौ शि चारः समानवा॥
इतराचारव त्वम त्वं र्नबाधनात्॥१७॥
स्मृतिमूलो हि सर्वत्र शिष्टाचार नोऽत्रच॥
अनुमे स्मृतिः स्म बाध्या प्रत्यक्षया तु सा॥१८॥
केषुचिद्दक्षिणदेशेषु मातुलस्य दुहितरं शिष्टाः परिणयन्ति। सोऽयमा
चारः प्रमाणम्। शिष्टाचारत्वात्। होला चारवदिति चेत्। न। स्मृ
तिविरुद्धत्वेन त्वान्यथापदिष्टत्वात्। न च स्मृतिः। मातुलस्य सु
तामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं
चरेदिति। नच स्मृत्याचारयोर्मूलवेदानुमापकत्वसाम्यात् समब
लत्वमिति वाच्यम॥ होलाकादिसदाचारस्य मन्वादिस्मृतिवद्वे
दानु पकत्वायोगात्। नहीदानीन्तनाः। शिष्टा मन्वादिवद्देशका
लविप्र ष्टं वेदं दिः ज्ञानेन साक्षात्कर्त्तुं शक्नुवन्ति येन शिष्टा
चारो मूलवेदमनुमापयेत्। शक्नोति तु यः कोऽपि शिष्टो यत्र क्वा
पि देशविशेषे कालविशेषे च यं कञ्चिदपि होला आचारस्य
मूलभूतं स्मृतिग्रन्थमवलोकयितुम्। तस्मात् शिष्टाचारेण स्मृ
तिरेवानुमातुं शक्यते। ननु श्रुतिः। अनुमिता च स्मृतिर्विरुद्धया
प्रत्यक्ष स्मृ बाध्यते। न एवाहुः। आचारात्तु स्मृतिं ज्ञात्वा
स्मृते श्रुतिकल्पनम्। तेन ह्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते
। त दप्रामाण्यमीदृशस्याचारस्याभ्युपेयम्। तत्रैवापरं वर्णक
मारचयति। लौकिको गो र्थेस्त्रि वृदादेः समन्वतः।
उभौ विध्यर्थवादैकवा त्वादस्त्विहान्तिमः॥१९॥
त्रिवृद्बर्हिर्भवति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोकसिद्धोऽर्थः
।वा गो दृ त्रात्मकतया केषु त्रिषु सूक्तेष्ववस्थितानां बहिष्प
व लोचनि दनस्तोमाणामुपासे गायन्तां नर इत्यादी

णामृचां नवकमर्थः। तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पदपदार्थ
निर्णये लोकवेदयोः समानबलत्वादुभावर्थौ विकल्पेन ग्रहीतव्या
विति चेत्। मैवम्। लौकिकार्थस्वीकारपक्षे विधिवाक्येऽर्थत्रिगुणप
मर्थवादवाक्ये स्तोत्रीयाणामृचां नवकमित्येवं विध्यर्थवादयोर्वैय
धिकरण्यादेकवा  त्वं न स्यात्। अत एकवाक्यत्वाय स्तोत्रीयाणां
नवकमेव विधिवाक्ये नियतोऽर्थः। षष्ठाधिकरणमारचयति॥

कल्प्यः पि  दिशब्दार्थो ग्राह्यो वा म्लेच्छरूढितः।
कल्प्य  र्येष्वसिद्धे  दनार्य्याणामनादरात्॥२०॥
ग्रा  म्लेच्छप्रसिद्धिस्तु विरोधादर्शने सति॥
पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः॥२१॥

आर्य्याः पिकादिशब्दं नक्वाप्यर्थे प्रयुञ्जते। म्लेच्छाश्च न प्रमाणभूताः
। तस्मान्निगमनिरुक्तव्याकरणैः पिकनेमादिशब्दानामर्थः कल्पनी
य इति चेत्। मैवम्। आर्य्यप्रसिद्धिविरोधस्यादृष्टत्वेनेदृशे विषये
म्लेच्छप्रसिद्धेरप्यादरणीयत्वात्। कल्प्यमानादव्यवस्थितादर्थादरं
म्लेच्छरूढिः। यत्र दृश्या अपि रूढेरभावस्तत्र निरुक्तादयश्चरितार्थाः
। न  दनार्य्यप्रसिद्ध्या पिकः कोकिलः। नेमशब्दोऽर्द्धवाची। तामरस
शब्दः पद्मवाचीत्येवं द्रष्टव्यम्। अस्मिन्नेवाधिकरणे गुरुमतमाह॥

अर्थाबोधादप्र  णं पिकालम्भनचोदना॥
मैवं म्लेच्छप्रसिद्ध्यापि तद्बोधादविरुद्धया॥२२॥
स्पष्टोऽर्थः। सप्त  धिकरणमारचयति॥

अपौरुषेयाः कल्पाद्याः कृत्रिमा वा न  त्रि  ः।
श्रुतिस्मृत्योर्धर्मबुद्धेः स्वतो  त्वं यतः समम्॥२३॥
पुं  मतोक्तेः पौरुषेयाः काठ  द्यसमत्वतः॥
तत्रोपलेभिरे केचिदापस्तम्बादिकर्त्तृताम्॥२४॥

बौधायनाप  स्वलायन  त्यायनादिनामाङ्किताः कल्पसूत्रा
दिग्रन्था निगमनिरुक्तषडङ्गग्रन्था मन्वादिस्मृतय  पौरुषेयाः॥
धर्मबुद्धिजनकत्वात्॥ वेदवत्। न च मूलप्र  णसापेक्षत्वेन वेदवै
षम्यमिति शङ्कनीयम्। उत्पन्ना  बुद्धेः  तः प्रामाण्याङ्गीकारेण।

निरपेक्षत्वात्। मैवम्। उक्तानुमानस्य कालात्ययापदिष्टत्वात्। बौधाय
नसूत्रमापस्तम्बसूत्रमित्येवं पुरुषनाम्ना ते ग्रन्था उच्यन्ते। न चका
ठकादि। समाख्यावत्। प्रवचननिमित्तत्वं युक्तम्। तद्ग्रन्थनिर्मा
णकाले तदानीन्तनैः कैश्चिदुपलब्धत्वात्। तच्चाविच्छिन्नपार
म्पर्य्येणानुवर्त्तते। ततः कालिदासादिग्रन्थवत् पौरुषेयाः। तथा
पि वेदमूलत्वात् प्रमाणम्। अत्रैव गुरुमतमाह॥

कल्पे सर्वतिथौ दर्शकार्य्यतोक्तेः श्रुतिर्न मा॥
न कल्पे साध्यवेदत्वग्रहाणा दुर्बलत्वतः॥२५॥

सर्वतिथौ दर्शयागकर्त्तव्यतां कल्पसूत्रकार आह। सर्वासु तिथि
ष्वमावास्या कर्त्तव्येति। श्रुतिस्त्वमावास्यायामेव तिथौ तत्कर्त्तव्य
तां ब्रूते। ततः कल्पसूत्ररूपेण वेदेन विरुद्धत्वादियं श्रुतिर्न मान
मिति चेत्। मैवम्। कल्पस्य वेदत्वं नाद्यापि सिद्धम्। किन्तु प्रयत्नेन
साधनीयम्। न च तत् साधयितुं शक्यम् पौरुषेयत्वस्य समाख्यया
तत्कर्त्तुरुपलम्भेन च साधितत्वात्। अतः कल्पसूत्रस्य दुर्बलत्वात्
यात् श्रुतेरप्रामाण्यम्। अथ माधिकरणमारचयति॥

होलाकादेर्व्यवस्था स्यात् साधारण्यश्रुतान्निमः
देशभेदेन दृष्टत्वात् साम्यं मूलसमत्वतः॥२६॥

होलाकादिशिष्टाचाराणां हारीतादिस्मृतिविशेषाणां चानुष्ठातृपुरु
षभेदेन व्यवस्थितं प्रामाण्यम्। कुतः। देशविशेषे तेषां दृष्टत्वात्।
होलाकादयः प्राच्यैरेव क्रियन्ते। वसन्तोत्सवो होलाका। आह्नीने
बुकादयो दाक्षिणात्यैः॥ स्वस्वकुलागत करञ्जार्कादिस्थावरदेवता
पूजादिकमाह्नीनैबुकशब्देनोच्यते। उद्वृषभयज्ञादय उदीच्यैः। ज्ये
ष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति। सोऽयमुद्वृषभ
यज्ञः। एवं हारीतादिस्मृतिः काचित् क्वचिद्देशविशेषे दृश्यते। तस्मा
द्व्यवस्थितं प्रामाण्यमिति चेत्। मैवम्। तन्मूलत्वेनानुमितस्य वेद
स्य — सर्वसाधारणत्वे तत्तेषामपि सर्वसाधारणत्वात्। अत्रैव गुरु
मतमाह॥ प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ पदे॥

अर्थाबोधादमानत्वे चेन्न सामान्यानुमानतः॥२७॥

प्राच्यादिभिर्व्यवस्थया होलाकादिष्वनुष्ठीयमानेषु तन्मूलश्रुतिरा-
पि प्राच्यादिपदयुक्तैवानुमातव्या। तत्र प्राच्यादिपदस्यार्थो न बुध्य
ते। ये पुरुषाः कञ्चित् कालं प्राच्यां निवसन्ति त एव कालान्तरे प्र
ती दिशि निवसन्त उपलभ्यन्ते तत्र श्रौतप्राच्यादिपदस्यार्था-
बोधादप्रमाणं श्रुतिरिति चेत्। मैवम्। अत्र न प्राच्यस्य मूल
श्रुति त्वकत्वात्। अतः प्रा दिपदराहित्ये सत्यर्थबोधादनुमि
ता श्रुतिः प्र णम्। नवमाधि रणमारचयति॥

गो दिषु साधुत्वे प्रयोगे वा न कश्चन॥
नियमोऽस्ति वा नास्ति व्याकृतेर्मूलवर्जनात्॥२८॥
साधूनेव प्रयुञ्जीत ग एव साधवः॥
इत्यस्ति नियमः पूर्वपूर्व निर्मूलता॥२९॥

व्याकरणाभिज्ञैः सा दिमद्वस्तुनि गौरित्येव शब्दः प्रयुज्यते। त
दनभिज्ञैस्तु स्व देशीयभाषामनुसृत्य गावी गोणी गोपी पोतलि
केत्येव द्यः शब्दाः प्रयुज्यन्ते। तत्रेदृश एव शब्दः साधुर्नेदृश
इत्यस्मिन्नर्थे नियामकं स्ति। न प्रयोगेऽपि तन्नास्ति। ईदृश
एव शब्दः प्रयो व्यो नेदृश इति न वृद्धव्यवहारो नियामकः
तस्य सर्वेषु शब्देषु समान त्। नापि व्याकरणस्मृतिर्नियामि-
का। तस्या निर्मूलत्वे नाप्रमाण त्। न ह्यभियुक्तप्रयोगस्तन्मूल
म्। अन्यो अयत्वप्रसङ्गात्। करणस्मृतेः माण्यसिद्धौ तद-
नुसारेण प्रयोक्तॄणामभियुक्त सिद्धिः। तत्सिद्धौ तत्प्रयोगमू
लतया व्या रणस्य प्रामाण्यम्। त न्नास्ति साधुत्वप्रयोगयो
र्नियम इति प्राप्ते ब्रूमः। साधूनेव शब्दान् प्रयुञ्जीत न त्वपशब्दा
नित्यस्ति नियमः। उभयत्र मेण गुणदोषवादिनो वेदवाक्ययोः
श्रवणात्। एकः शब्दः सम्यग्ज्ञातः प्रयु :स्वर्गे लोके च कामा-
धुग्भवतीति गुणवा म्नात द रेण न म्लेच्छितवै ना-
प भाषितवै। म्लेच्छो ह एष यदपशब्द इति दोष म्नाय
प्रयोगनियमस्त साधुत्वेऽपि नियमो द्रष्टव्यः। गा एव साध
वो न तु गा द्य इत्यस्मिन्नर्थे। करण नि मकत्वात्॥

न च निर्मूलत्वम्। पूर्वपूर्वव्याकरणस्य तन्मूलत्वात्। एतदेवाभिप्रेत्यो क्तम्। तत्र यूपादिकरणवद्व्याकरणपरम्परानादित्वादनुपालम्भ इति करणप्रामाण्यं साक्षादेव वेदेनोपन्यस्तम्। तथा चाथ र्वणिका आमनन्ति। द्वे विद्ये वेदितव्ये इति ह स्माहुर्यद् ब्र वि दो वदन्ति। परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदो ऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति तैत्तिरीय केऽपि व्याकरणस्योपादेयता श्रूयते। वाग्वै पराच्यव्याकृतावद त्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद्वरं वृणे मह्यं चैवैष वायवे च सह गृह्याता इति न ऐन्द्रवायवः सह गृह्यते ।तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते॥ इति। कर्त्तारश्च पाणिनिकात्यायनपतञ्जलयो मन्वादिसमानाः। न तु साधूनामेव प्रयोगे गवादीनामेव साधुत्वे व्याकरण स्मृतिः प्रमाणम्। अत्रैव गुरुमतमाह॥

अश्वालम्भनशास्त्रस्य दन्त्यतालव्यसंशयात्
अमात्वेऽदन्त्यनिर्णीति राप्तोक्त्व्याकृतेर्बलात्॥३०॥

लभेते त्यत्राकार वकारयोर्मध्यवर्त्तिनो वर्णस्य दन्त्यत्वे॥ स्वं धनम् तद्रहितं दरिद्रमालभेतेत्यर्थो भवति॥ तालव्यत्वे तुर ङ्गमवाचित्वम्। ततः संशयादप्रामाण्यमितिचेत्। न। करणा नुसारेणाश्व्याप्ताविन्यस्माद्धातो रौणादिके व प्रत्यये इति ताल व्यनिर्णयात्। तस्मादश्वालम्भनशास्त्रं प्रमाणम्। दशमाधिकरणं प्रथमवर्णकमारचयति॥

लोके पदपदार्थौ यौ न तौ वेदेऽथवात्र तौ।
रूपभेदात् पदं भिन्नमु त्वादिभिदा स्फुटा॥३१॥
वर्णैकत्वात् पदैकत्वं क्वचित्कौ रूपभिन्नता॥
प्रायिकेण पदैक्येन तदर्थै न विधम्॥३२॥

वैदिकौ पदपदार्थौ लौकिकाभ्यां पदपदार्थाभ्यामन्यौ। कुतः। रूप भेदात्। पदे तावद्रूपभेदो दृश्यते। आ शब्द कारादित्वे न लोके नियतः। वेदे तु क्वचिदा ं रहितः पठ्यते। मयतं पुरुषं त्मनेति॥

ब्राह्मणा इति लोके। वेदे त्वन्यथा पठ्यते। ब्राह्मणासः पितरः सोम्यास इति। अर्थभेदोऽपि स्फुटः। उत्ताना वै देवगवा वहन्तीति श्रूयते। मनुष्यगवास्त्ववाञ्चो वहन्ति। वेदे वनस्पतिर्हिरण्यपर्णः। तथा च श्रूयते। देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थमिति। तस्माल्लोकवेदयोः पदपदार्थावन्याविति प्राप्ते ब्रूमः। य एव लौकिकाः पदार्थास्त एव वैदिकाः। तथाहि वर्णानां तावन्नित्यत्वं प्रथमे पादे साधितम्। यथा मयोक्तॄणां पुरुषाणां भेदेऽप्येकैकस्य पुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इति प्रत्यभिज्ञानाद्वर्णैक्यम्। तथा यानि लोके गवादिपदानि तान्येव वेदे विधीयमानानीत्य बाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयम्। त्मना देवास इत्यादिपदभेदस्तु काचित्कः। नैतावता बहुतरप्रत्यभिज्ञावगतपदैक्यमपोढुं शक्यम्। अन्यथा सोऽयं देवदत्त इति प्रत्यभिज्ञातं देवदत्तैक्यमपि देशादिभेदमात्रेणापोह्येत। पदैक्ये चार्थैकत्वमवश्यम्भावि। अन्यथा वेदे पृथग्व्युत्पत्त्यभावादबोधकत्वं प्रसज्येत। एतदेवाभिप्रेत्योक्तम्। लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति। स्रुवयूपाहवनीयादिशब्दानां तदर्थानां चालौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहाराद्व्युत्पत्तिः सम्भवति। उत्तानवहनादिकं त्वर्थवादः। अस्तु वा तथा वहनम्। तथाप्युत्तानादिशब्दास्तदर्थाश्च लोकसिद्धा एव। तस्माद्य एव लौकिकाः पदपदार्थास्त एव वैदिकाः॥ द्वितीयवर्णकमारचयति ॥

व्यक्तिर्व्रीह्यादिशब्दार्थ आकृतिर्वा क्रियान्वयात्।
व्यक्तिर्व्युत्पत्तिवेलायामाकृत्या सोपलक्ष्यते॥ ३३॥
शक्तिग्रहादियुक्तिभ्य आकृतेरर्थतोचिता॥
क्रियापर्यवसानाय व्यक्तिस्तत्रोपलक्षणम्॥ ३४॥

व्रीहीनवहन्ति। पशुमालभेत। गामानय। ब्राह्मणो न हन्तव्य इत्यादिप्रयोगेषु व्रीह्यादिशब्दानां व्यक्तिरर्थः। कुतः। अवहननादिक्रियाभिर्व्यक्तेरन्वेतुं शक्यत्वात्। नत्वाकृतिरवहन्तुमालब्धुमानेतुं वा योग्या। नन्वानन्त्यव्यभिचाराभ्यां न व्यक्तौ व्युत्पत्तिः सम्भवति।

अनन्ता हि गोव्यक्तयः। अतीतानामनागतानामनेकदेशवर्त्तिनां गवामियत्तया अनवधारणात्। किञ्च। शुक्लव्यक्तौ व्युत्पन्नो गोशब्दः कृष्णव्यक्तौ प्रयुज्यमानः स्वार्थं व्यभिचरेत्। तत्र कायं व्युत्पत्तिरिति चेत्। एवं तर्हि व्युत्पत्तिकाले या व्यक्तिरुपलब्धा तामिति प्राप्ते ब्रूमः। अन्वयव्यतिरेकाभ्यामाकृतेः शक्तिग्रहणनिमित्तत्वाच्छब्दार्थत्वं तस्यायोचितम्। किञ्च। गोशब्दे उदिते व्यक्तिवादिनः संशयो भवेत्। तस्मादाकृतेरेवाभिधेयत्वम्। अयं कृतावववहननादिक्रिया न पर्य्यवस्येत्। नहि व्यक्तिस्तत्रोपलक्षणीया। किञ्च। श्येनचितं चिन्वीतेत्यादावाकृतेरेव सादृश्यप्रतियोगितया कार्य्यान्वयो दृश्यते। तस्मादाकृतिः शब्दार्थः।

अत्रैव गुरुमतमाह॥

गवादिचोदना नो मा जातिव्यक्त्योः रनिर्णयात्॥
आनन्त्यव्यभिचाराभ्यां नव्यक्तिरिति निर्णयः॥३५॥

श्लोकोऽर्थः॥ इति माधवीये जैमिनीयन्यायमालाविस्तरे प्रथमाध्यायस्य तृतीयः पादः॥ ॥

चतुर्थपादस्य प्रथमाधिकरणं वार्त्तिककारो नीतमारचयति॥

उद्भिदादिपदं धर्मे किममानमुत प्रमा॥
विध्यर्थवादमन्त्रा शेष्वनन्तर्भावतो नमा॥१॥
अन्तर्भावो विधावुद्भिदा यजेतेति दृश्यते॥
नामत्वे नान्वयो वाक्ये वक्ष्यतेऽतः प्रमैव तत्॥२॥

उद्भिदा यजेत। विश्वजिता यजेतेत्येवं म म्नायते। तत्रोद्भिदादिपदं नधर्मे प्रमाणम्। कुतः। प्रमाणत्वेनाभिमतेषु त्रिषु वेदविभागेष्वनन्तर्भावात्। न हि विधिः साक्षात् प्रवर्त्तकत्वात्। अर्थवादमन्त्रौ तु विध्यन्वयेन। तत्र न तावदुद्भिदादि पदं विधावन्तर्भवति। विध्यर्थरूपाया भावनाया अंशेषु भाव्यकरणेतिकर्त्तव्यतारूपेषु कस्याप्यवाचकत्वात्। नाप्यर्थवादत्वम्। स्तुतिनिन्दाद्यभावात्। नापि मन्त्रवत्। उत्तमपुरुषादीनां मन्त्रलिङ्गानामभा

त। न चोक्तम्। उत्त म, स्य न्तरूपाद्यभावतः। म
न्त्वप्रसिद्धभा मन्त्रे नयुज्यत इति। मये जुष्टं वे
पा मीत्युक्तमपुरुषः। दे यशस्विन् यशसे समर्पये मन्त्रेण
म। उर्वीचासि वस्वी मौत्य रूपम्। इषे त्वोर्जे ।
रूपम्। दि शब्दे शीर्देव प्रति द र्यः। एव दि नन्त
र्भी द न मि चेत्। नविध्वंशे रणोऽ भी नाप्यद्यपि लि
ङ्पदेन् सह स नपदे नो यजिर्धा र्थः करणम्। न न
स्य यजेर्नामत्वे नो दादिपदमन्वेति। न न प्र णाम्। द्विती ।
धिकरणमारचयति॥

गुणोऽयं मधेयं नित्रेःस्य निरुक्तितः॥
ज्यो ष्टोमं समाश्रित्य पशव्यर्थगुणचोदः ॥३॥
फलोद्भिदादि स ने रूक्तियाग पि॥
नामत्व मु ते यागसा धि रणयतः॥४॥

उद्भिदा यजेत प म इत्यत्र तृतीयान्ते नोद्भित्। पदेन योऽर्थो विवक्षितः सोऽयं यागे श्वद्गुणः न। द जुहोतीत्यनेन गुण। विधिना सं न त। अर्थाच्येत। दधि शब्दार्थो लो प्रसिद्धः। उद्भिच्छब्दार्थस्त्वप्रसिद्ध इति। नन्व। रूढ्यभावेऽप्यवयवार्थ निरु न तत्प्रसिद्धेः। उद्भिद्यते भूमिरनेनेति व्युत्पत्त्या खनित्रवाची शब्दः। न चात्र पशुफलकः कश्चिद्यागो विधीयत इति व्यम्। पशूनां गुणफलत्वात्। य गोदोहनेन पशुकामस्येत्यत्र पशवो गोदोहनगुणस्य फलम्। तथेह खनित्रगुणस्य फलम्। स्तु। यदि चमसे पः प्रणये दिति विहितं प्रकृतमपां प्रणयनमाश्रित्य गोदोहनं विधीयते। तर्ह्यत्रापि ज्योतिष्टोमेन यजेतेति विहितं प्रकृतं ज्योतिष्टोम श्रित्य खनित्रं विधीय म तस्मादगुणविधिरिति प्राप्ते ब्रूमः। पशुकामो यजेतेत्यस्य पदद्वय यमर्थः। पशुरूपं फलं यागेन रणेन कुर्यादिति। तत्र केन यागेनेत्यपेक्षायामुद्भिदेति तृती न्तपदं यागनामत्वेनान्वेति। उद्भिद्यतेपशुफलमनेन यागेनेति निरुक्त्या नामत्वमुद्भित् पदस्योपपद्य

ते।एवमपि गुणविधिनामधेयत्वयोः शब्दनिर्वचनसाम्यान्न नि
र्णय इतिचेन।मैवम्सा  नाधिकरणस्य निर्णायकत्वात्।
उद्भि  मकेन यागेन फलं कुर्य्यादित्युक्तेसा  नाधिकरण्यं
लभ्यते। गुणत्वे  नित्रेण साध्यो यो यागस्तेनेत्येवं वैयधि
करण्यं स्यात्।यदि खनित्रवता यागेनेति सामानाधि  रण्ययु
ज्येत।तदा मत्वर्थलक्षणा प्रसज्येत।तस्मादुद्भिदादिपदं नाम
धेयम्।द  जुहोति।व्रीहिभिर्यजेते  दि  द्रव्यविशेषे द
ध्यादिशब्दानामत्यन्तरूढतया यागनाम  सम्भ  दग
गुणत्व  श्रितम्।सोमेनयजेतेत्य  प्यप्रसिद्धार्थ  मधेयत्व
कल्पनातो वरं प्रसिद्धार्थद्वारेण  लक्षणाश्रयणमित्यभिप्रे०
त्य सोमद्रव्यव  यागेनेतिमत्वर्थलक्षणा स्वी  ता।उद्भिच्छ
ब्दस्य  लोकप्रसिद्धार्थाभा  दुक्तरीत्या नामत्वं युक्तम्।प्रयोज
नन्तु नाम्नः सर्वत्रव्यवहार एव।नह्यन्तरेण नामधेयमुत्पत्तिप्र०
रणादिष्वनेनाहं यस्य इ  त्यानोपायो लघुःकश्चिदस्ति।त०
स्मादुद्भिदादिपदं नामधेयम्।अत्रैव गुरुमतमाह॥

लौकिके गणयागेऽस्य विधेः सापेक्षतेति चेत्॥
निरु  क्तेन  गस्य नाम  त्निरपेक्षता॥५॥

उद्भिदायजेतेत्ययं गुणविधिः।त  स्य  श्चिच्छ्रोत  श्रयोल
भ्यते।ततो लौकिको मा  वगणयागादिरा श्रयत्वेनापे  क्षणीयः।
तस्मिन्यागे गुणोऽयं विधीयते।त  सति सापे  दप्रामा
ण्यमस्याश्रौत  या इति चेत।मैवम्।पूर्वोक्तनिरुक्त्या श्रौत।
याग  मत्वे सतिनिरपेक्ष  त्वात्वतो धि  रणमाश्रयति॥

यच्चित्र  यजेतेति तद्गुणो नाम  भवेत॥
चि  स्त्री  गुणो रूढेऽग्नीषोमीयके पशौ॥६॥
द्वयोर्विधौ  भेदो वैशिष्ट्ये गौरवं ततः॥
मष्ट  ज्यवहिष्पवमानेषु तत्त  ॥७॥

चित्रया यजेत पशु  म इ  यते।तत्र चित्राशब्दो नोद्भिच्छ
ब्दवद्यौगिकः।कि  रू  चित्रत्वं स्त्रीत्वञ्चाभिधत्ते।ततो तप्र

र्वन्यायेन नामत्वम्। तथा सत्यग्नीषोमीयं पशुमालभेतेति विहि
तं पशुयागमत्र यजेतेत्यनेन पदेनानूद्य तस्मिन् पशौ चित्रात्व
स्त्रीत्वगुणौ विधीयेते इति प्राप्ते ब्रूमः। चित्रत्वं स्त्रीत्वं चेति द्वावे
तौ गुणौ। तयोर्द्वयोर्विधाने वाक्यं भिद्येत। तथा चोक्तम्। प्राप्ते क
र्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयेरन् बह
वोऽप्येकयत्नत इति। अथ वाक्यभेदपरिहाराय गुणद्वयविशि
ष्टं पशुद्रव्यरूपं कारकं विधीयते। तदा गौरवं स्यात्। तस्माच्चि
त्राशब्दः पूर्ववद्यजिसामानाधिकरण्येन यागनामधेयं भवति। चि
त्रत्वञ्च तस्य विलक्षणद्रव्यद्वारेणोपपद्यते। दधि मधु घृत
पो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमिति दध्यादीनि वि-
चित्राणि प्रदेयद्रव्याणि षडाम्नातानि। तदेतच्चित्रानामकस्य
यागस्योत्पत्तिवाक्यम्। यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजाप
तिदेवतयोरत्रोपदिश्यमानत्वात्। उत्पन्नस्य तस्य यागस्य चि
त्रया यजेत पशुकाम इत्येतत् फलवाक्यम्। एवं सति प्रकृता
र्थो लभ्येत। अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतहा
ना प्रकृतप्रक्रिये प्रसज्येयाताम्। लिङ्प्रत्ययस्य चानुपादकत्वा
ङ्गीकारान्मुख्यो विध्यर्थो बाध्येत। तस्माच्चित्रापदं नामधेयम्।
यथा चित्राशब्दे च तत्कर्मनामधेयत्वं योजनीयम्। एवं हि
श्रूयते। त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि। सप्तदशा
नि पृष्ठानीति। अस्य वाक्यत्रयस्यार्थो विव्रियते। सामगानामु
त्तरग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि। तत्रोपास्मै गायता-
नर इत्याद्यं सूक्तम्। दविद्युतत्या रुचेति द्वितीयम्। पवमानस्य
ते कव इति तृतीयम्। ज्योतिष्टोमस्य प्रातःसवनानुष्ठाने तेषु
सूक्तेषु गायत्रं साम गातव्यम्। तदिदं सूक्तत्रयगानसाध्यं स्तो
त्रं बहिष्पवमानमित्युच्यते। तत्रावस्थितानामृचां पवमानार्थ
त्वात्। बहिःसम्बन्धाच्च। तत्खल्विदं स्तोत्रमितरस्तोत्रवत् सदोना
मकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्भशाखायाः सन्निधौ प्र
युज्यते। किन्तु सदसो बहिःप्रसर्पद्भिः प्रयुज्यते। तस्य च बहिष्पव

मानस्य त्रिवृन्नामकस्तोमो भवति। तस्य च स्तोमस्य विधायकं।
ब्राह्मणवाक्यमेवमाम्नायते। तिसृभ्यो हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमया उद्यती त्रिवृतो विष्टुतिरिति। अयमर्थः। सूक्तत्रयपठितानां न मृचां गानं त्रिभिः पर्य्यायैः कर्त्तव्यम्। तत्र प्रथमे पर्य्याये त्रिषु सूक्तेषु आद्यास्तिस्र ऋचः। द्वितीये पर्य्याये मध्यमाः। तृतीये पर्य्याये उत्तमाः। तिसृभ्य इति तृतीयार्थे पञ्चमी। हिंकरोति गायतीत्यर्थः। सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः स्तुतिः स्तुतिप्रकारविशेषः। अस्या विष्टुतेरुद्यती नामेति। एवं परिवर्त्तिनी कुलायिनीति द्वे विष्टुती। तयोः परिवर्त्तिन्येवमाम्नायते। तिसृभ्यो हिंकरोति स पराचीभिस्तिसृभ्यो हिंकरोति स पराचीभिस्तिसृभ्यो हिंकरोति स पराचीभिः परिवर्त्तिनी त्रिवृतो विष्टुतिरिति। पराचीभिरनुक्रमेणाम्नाताभिरित्यर्थः। कुलायिन्येवमाम्नायते। तिसृभ्यो हिंकरोति स पराचीभिस्तिसृभ्यो हिंकरोति। या मध्यमा सा प्रथमा योत्तमा सा मध्यमा या प्रथमा सोत्तमा तिसृभ्यो हिंकरोति योत्तमा सा प्रथमा या प्रथमा सा मध्यमा या मध्यमा सोत्तमा कुलायिनी त्रिवृतो विष्टुतिरिति।
अत्र प्रथमसूक्ते पाठक्रम एव। द्वितीये मध्यमोत्तमप्रथमाः। तृतीये उत्तमप्रथममध्यमा इत्येवं व्यत्ययेन मन्त्रा गातव्याः तदिदं विष्टुतित्रयं विकल्पितम्। त्रिवृच्छब्दस्येदृशं स्तोमस्वरूपमर्थो न तु त्रैगुण्यमिति पूर्वं दर्शितम्॥ ॥

उत्तरग्रन्थे बहिष्पवमानसूक्तेभ्यस्त्रिभ्य ऊर्ध्वं च विसूक्तान्याम्नातानि। अग्न आ याहि वीतय इत्याद्यं सूक्तम्। आ नो मित्रावरुणेति द्वितीयम्। आ याहि सुषुमा हि त इति तृतीयम्। इन्द्राग्नी आगतं सुतमिति चतुर्थम्। तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्य्याज्यस्तोत्राणीत्युच्यन्ते। तन्निर्वचनं च श्रूयते। यदाजिमीयुस्तदाज्यानामाज्यत्वमिति। तेष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति। तस्य स्तो।

मस्य विष्टुतिरेवमाम्नायते। पञ्चभ्यो हिंकरोति स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स ए पञ्चभ्यो हिंकरोति स एक स एकया स तिसृभिरिति। ये सूक्तं त्रिरावर्त्तयम्। तत्र प्रथमा वृत्तौ प्र या ऋचस्त्रिरभ्यासः। द्वि वृत्तौ मध्यमायाः। तृती वृत्तावुत्त ः। सोऽयं पञ्चदशस्तोमः॥ उक्तेभ्यस्तुर्भ्यः सूक्तेभ्य ऊर्ध्वमुत्तरग्रन्थे त्रीणि ध्यन्दिनपव मानसूक्तान्याम्नाय तत ऊर्ध्वं चच रि सूक्त तानि। ते स्वभि स्तूरनो तुम हूर मा या नश्चित्र भुवदिति द्वि तीयम्। तं दस्ममृतीषहमिति तृतीयम्। तरोभिर्वो विदद्वसुमिति चतुर्थम्। ए नि क्रमेण रथन्तरवामदेव्यनौधस लेय मभिर्माध्यन्दिन सवने गीयमानानि पृ स्तोत्राणीत्यु न्ते। स्पर्श नात् पृष्ठानीत्येवं निरुक्तिर्द्रष्ट ।तेषु स्तोत्रेषु सप्तदशस्तोमोभवति।तस्य स्तोमस्य विष्टुतिरेव म्नायते।पञ्चभ्यो हिंकरोति स तिसृभिः स ए या स एकया पञ्चभ्यो हिंकरोति स एक स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः सा सृभिरिति। अत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः। द्वितीय वृत्तौ मध्यमायाः। तृतीयावृत्तौ मध्यमोत्तमयोः सोऽयं सप्तदशस्तोमः। अत्र त्रिष्वपि वाक्येषु त्रिवृत्पञ्चदशसप्तदशशब्दा गु विधा यकत्वेन सम्मताः। यदि बहिष्पव ज्यपृ शब्दा पि गुण विधायकाः स्युः। तदा प्रत्युदाहरणं गुणद्वय विधानाद्वा भेदः तान्तु बहिष्पव नादिशब्दाः स्तोत्रनामधेयानि। तैर्नाम भिः कर्माण्यनूद्य त्रिवृदादिगुणा विधीयन्ते॥ ॥

चतुर्थाधिकरणमारचयति॥

अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू॥
विधेयो गुणास गवाहोस्वित् कर्म मती॥८॥
अग्नये होत्रमत्रेति बहुव्रीहिर्गतोऽनलः॥
गुणो विधेयो नामत्वे रूपं नस्यात्सरद्वृते॥९॥
संक्रियाघारमाघारयतीत्युक्ताद्वितीयया॥

आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी ॥१०॥
अग्निर्ज्योतिरिति प्रोक्तो मन्त्राद्देवस्तथा घृतम्॥
चतुर्गृहीतवाक्यो  द्वितीयायास्त्वियं गतिः ॥११॥
नासाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा॥
साध्यतां वक्ति संस्कारो नैवाशङ्क्यः क्रियात्वतः॥१२॥

अग्निहोत्रं जुहोति। आघारमाघारयतीत्यत्राग्निहोत्रशब्दस्य
कर्मनामत्वे द्रव्यदेवतयोरभावाद्यागस्य स्वरूपमेव न सिध्ये
त्। ततोऽपि देवतारूपो गुणोऽनेन दर्विहोमे विधीयते। घार
शब्दश्च घृ क्षरणदीप्त्योरित्यस्माद्धातोरुत्पन्नः क्षरद्घृतमाच
ष्टे। तस्मिंश्च घृते द्वितीया विभ संस्कार्य्यत्वं प्रतीयते। तच्च सं
स्कृतं घृतमुपांशुयाजे द्रव्यं भवति। तस्मादग्निहोत्राघारशब्दौ
गुणसंस्कारयोर्विधायकाविति प्राप्ते ब्रूमः। अग्निर्ज्योतिर्ज्योति
रग्निः हेति सायं जुहोति। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति
प्रातरिति विहितेन मन्त्रेण प्राप्त द्देवता न विधेया। ततोऽ
ग्निसूर्य्यदेवताकस्य सायंप्रातः त्वयोर्नियमेनानुष्ठेयस्य क
र्मणोऽग्निहोत्रमिति यौगिकं नामधेयम्। योगश्च बहुव्रीहिणा
दर्शितः। चतुर्गृहीतं एतदभूत न घारमा र्य्येत्यनेनैवा
ज्यद्रव्यस्य प्राप्तत्व क्षरद्घृतसं रः विधेय दाघारश
ब्दोऽपि यौगिकं कर्मनामधेयम्। यस्मिन् कर्मणि नैर्ऋतीं दि
शमारभ्यैशानीं दिशमवधिं कृत्वा सन्तत्या घृतं क्षार्य्यते तस्य
कर्मण एतन्नाम। ननु नामधेयत्वे सत्युद्भिदा यजेत ज्योतिष्टो
मेन यजेतेत्यादाविव धात्वर्थेन करणेन सामानाधि रण्या
ग्निहोत्रेण जुहोत्याघारेणाघारयतीति तृतीयया भवितव्यम्।
नैष दोषः। अनुष्ठानादूर्ध्वं धात्वर्थस्य सिद्धत्वाकारेण करणत्वे
ऽपि ततः पूर्वं साध्यत्वा रं वक्तुमग्निहोत्रमाघारमिति द्विती
याया युक्तत्वात्। नचात्र द्वितीयानु रेण व्रीहीन् प्रोक्षतीत्यादा
विव संस्कारः शङ्कनीयः। व्रीहिशब्दवदग्निहोत्राघारशब्दयोः॥
प्रसिद्धद्रव्यवाचकत्वाभावेन क्रिया ॥चित्वाभ्युपगमात्॥ तस्मा

दग्निहोत्राघारशब्दौ दर्विहोमोपांशुयाजयोर्गुणासं रविधा यिनौ नभवतः। किन्तु कर्मान्तरयोर्नामनी।

पञ्चमाधिकरणमारचयति॥

श्येनेनाभिचरन् मर्त्यो यजेतेति श्रुतो गुणः॥
विधीयते पक्षिरूपो नाम वातस्य कर्मणः॥१३॥
श्येनेनेति गुणः काम्यः सौमिकः सोमबाधया॥
न चित्रावद्वाक्यभेदो रूढेश्चैवमनुग्रहः॥१४॥
यथा वै श्येन इत्युक्ता ह्युपमानोपमेयता॥
नैकस्मिंस्तेन गौणत्वास्य वृत्या स्यात्व र्मनामता॥१५॥

श्येनेनाभिचरन् यजेतेत्यत्र नामत्वे द्रव्यदेवतयोरभा द्याग स्वरूपमपि न सिध्येत्। ततः सोमयागे नित्यसोमद्रव्यं ॥धि सोमस्य स्थाने पक्षिद्रव्यरूपो गुणः काम्यो विधीयते। तथा स ति श्येनशब्दस्य पक्षिणि लोकसिद्धा रूढिरभ्युपगता भवति। न च गुणविधित्वे चित्रायामिव वाक्यभेद आपादयितुं शक्यः। चित्रत्वस्त्रीत्ववद्गुणद्वयाभावादिति प्राप्ते ब्रूमः। यथा वै श्येनो निपत्यादत्ते। एवमयं द्विषन्तं भ्रातृव्यमादत्ते यमभिचरति श्ये- नेनेति वाक्ये नोक्त उपमानोपमेयभावः पक्षिण्येकस्मिन्न यु ज्यते। तस्मात् पक्षिण उपमानस्य गुणा उपमेये कर्मण्यस्तीति श्येनशब्दस्याभिचारकर्मनामत्वम्। सन्देशेनाभिचरन् यजेत। गवाभिचर्य्यमाणो यजेतेत्यत्र सन्देशगोशब्दयोर्नामत्वं श्येन शब्दवद्द्रष्टव्यम्। यथा संदंशेन दूरादानमादत्ते। य गावो। गोपायन्तीति वाक्यशेषाभ्यामुपमानोपमेय भा मिधानात्॥

ष धिकरणमारचयति॥

यजेत जपेयेन स्वाराज्यार्थीत्यसौ गुणः॥
नाम वा गुणता तन्त्रयोगाद् गुणफलद्वये॥१६॥
साधारणयजेः कर्मकरणत्वेन न ॥
त्रिकद्वयं विरुद्धं स्यात् तन्त्रताया फ म ॥१७॥
उपादेय विधेयत्वगुणत्वाख्यंत्रि यजेः॥

उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति॥१८॥
त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः॥
वाजपेयेतिशब्दोऽपि कर्मनामाग्निहोत्रवत्॥१९॥

वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजपेयशब्देन गुणो विधीयते। अन्नवाची वाजशब्दः। तच्चान्नं पेयं सुराद्रव्यमात्र गुणः। सुराग्रहाणामनुष्ठेयत्वात्। ननु गुणत्वे वाजपेयगुणवता यागेन स्वाराज्यं भावयेदित्येवं मत्वर्थलक्षणा प्रसज्येत। मैवम्। स द्युच्चारितस्य यजेतेत्याख्यातस्य वाजपेयगुणे स्वाराज्यफले च तन्त्रेण सम्बन्धाङ्गीकाराद्वाजपेयेन द्रव्येण स्वाराज्याय यजेतेत्येवमुभयसम्बन्धः। ननु गुणसम्बन्धे सति वाजपेयगुणेन यागं कुर्य्यादिति यजेः कर्म रकत्वं भवति। फलसम्बन्धे तु यागेन स्वाराज्यं सम्पादयेदिति करणरकत्वम्। ततः कथमुभयसम्बन्ध इति चेत्। नायं दोषः। यजेः साधारणत्वेन द्विरूपत्वसम्भवात्। यजेतेत्यत्र प्रकृत्या याग उक्तः। प्रत्ययेन भावना। तयोस्तु समभिव्याहारात् सम्बन्धमात्रं गम्यते। न कर्मत्वकरणत्वयोः साधारणमात्र खलु तत्र कर्मत्वस्यैव करणत्वस्य वा साक्षादभिधायिका विद्साधारणी विभक्तिः श्रूयते। अतः साधारणस्य यजेरुभाभ्यां युगपत्सम्बन्धे सति यथोचितसम्बन्धविशेषः पर्य्यवस्यति। एवं तन्त्रेण सम्बन्धाङ्गी रे वाजपेयद्रव्येण यागं कुर्य्यादित्यर्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि नास्तिमत्वर्थलक्षणा। यद्युद्भिदादिष्वप्येवं गुणविधिः स्यात्। तर्हि तान्यपि क्वान्यत्रोदाहृत्य तदीयः सिद्धान्तः पुनराक्षिप्यतामिति प्राप्ते ब्रूमः। यजेतेत्यत्र तन्त्रेणोभयसम्बन्धे सति विरुद्धत्रिकद्वयापत्तिः स्यात्। उपादेयत्वं विधेयत्वं गुणत्वं चेत्येकं त्रिकम्। उद्देश्यत्वमनुद्य मुख्य चेत्यपरं त्रि म। तत्रोद्देश्यत्वादयस्त्रयः स्वाराज्यफलनि धर्माः। उपादेयत्वादयस्त्रयः साधनभूतयजिनि धर्माः फल द्दिश्य यजिरुपादीयते। फलमनूद्य य

जिर्विधीयते। फलं प्रधानम्। यजिरुपसर्जनम्। फलस्योद्देश्यत्वं नाम मानसापेक्षाविषयत्वाकारः। यजेरुपादेयत्वं नामानुष्ठेयमानत्वाकारः। तावुभौ मनःशरीरोपाधिकौ धर्मौ। अनुवाद्यत्वविधेयत्वधर्मौ तु शब्दोपाधिकौ। ज्ञातस्य कथनमनुवादः। अज्ञातस्यानुष्ठेयत्वकथनं विधिः। फलयागयोः साध्यसाधनत्वरूपतया प्रधानत्वोपसर्जनत्वे। एवं सति फलतत्साधनयोः स्वाराज्ययागयोः स्वभावपर्य्यालोचनायां यथा फलस्योद्देश्यत्वादित्रिकं यागस्योपादेयत्वादित्रिकं व्यवतिष्ठते। तथा यागस्य वाजपेयस्य च साध्यसाधनभावपर्य्यालोचनायां यागफलस्योद्देश्यत्वादित्रिकं वाजपेयद्रव्यस्योपादेयत्वादित्रिकञ्च पर्य्यवस्यति। ततो यागस्य फलद्रव्याभ्यां युगपत् सम्बन्धे सति विरुद्धत्रिकद्वयमापद्यते। ननु तर्हि माभूत् तत्रोभयसम्बन्धः। पृथक् सम्बन्धाय यजिरावर्त्त्यतामिति चेत् न। वाक्यभेदप्रसङ्गात्। द्रव्येण यागं कुर्य्यादित्येकं वाक्यम्। यागेन फलं कुर्य्यादित्यपरम्॥ तस्माद् वाजपेयशब्दो न गुणविधायकः। किन्तु यथो द्रं ॥ निमित्तीकृत्याग्निहोत्रशब्दवत् कर्मनामधेयम्। सप्तमाधिकरणमारचयति ॥

यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथवा ॥
नामाग्निहोत्रवन्नैवं नामत्वे देव नहि ॥२०॥
मन्त्रोऽपि नेह प्रत्यक्षस्तद्धिता द्देवता विधिः ॥
देवद्रव्यविशिष्टस्य विधानादेकवाक्यता ॥२१॥

दर्शपूर्णमासयोः श्रूयते। यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति। तत्र यथाग्निहोत्रशब्दोऽग्नये होत्रमत्रेत्यसुमर्थं निमित्तीकृत्य कर्मनामधेयम्। त मेयशब्दोऽप्यग्निसम्बन्धं निमित्तीकृत्य कर्मनाम दिति चेत्। मैवम्। नामत्वे देवताराहित्य प्रसङ्गात्। अग्निहोत्रे त्वग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीत्यनेन विहितो मन्त्रः प्रत्यक्षविहित इति मान्त्रवर्णिकी देवता लभ्यते। इह तु नादृशो मन्त्रोऽस्ति।

आग्नेयशब्दस्तु देवतां विधातुं शक्नोति। अग्निर्देवतास्येत्यस्मि न्नर्थेन तद्धितस्योत्पन्नत्वात्। नच द्रव्यदेवतयो रुभयोर्गुणयोर्वि धानाद् वाक्यभेद इति शङ्कनीयम्। कर्मणः प्राप्तत्वेन गुणद्व यविशिष्टस्य कर्मण एकेन वाक्येन विधानात्। तस्मादाग्नेयश ब्देन देवतागुणो विधीयते। अत्र गुरुमतमाह॥

यदाग्नेय इति प्रोक्तं तमानं विध्यसम्भवात्॥
इति चेन्न विशिष्टार्थविधौ सत्यप्रमा कुतः॥२२॥

उदाहृतवाक्ये देवताविहितस्यप्रसङ्गेन नामत्वाभावाद्गुणयोर्विधौ क्यभेदाच्च विध्यसम्भवादप्रामाण्यमितिपूर्वपक्षः। गुणद्वय विशिष्टकर्मविधिसम्भवात् प्रामाण्य मिति सिद्धान्तः॥

अष्टमाधिकरणमारचयति॥
बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः॥
जात्यर्था शास्त्ररूढे स्तेस्युः संस्कारवाचिनः॥२३॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः॥
विनापि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः॥२४॥

दर्शपूर्णमासयोः श्रूयते। बर्हिर्लुनाति। आज्यं विलापयति। पु रोडाशं पर्य्यग्निं करोतीति। तत्र बर्हिरादिशब्दानां शास्त्रे सर्व त्र संस्कृतेष्वेव तृणादिषु प्रयोगात् पील्वादिशब्देषु शास्त्री यरूढिप्राबल्यस्योक्तत्वाद् यूपाहवनीयादिशब्दवत् संस्कार वाचिनो बर्हिरादिशब्दा इति चेत्। मैवम्। अन्वयव्यतिरेका भ्यां जातिवाचित्वात्। यत्र यत्र बर्हिरादिशब्दप्रयोगस्तत्र त त्र जातिरित्यस्या व्याप्ते र्लोके वेदे च नास्ति व्यभिचारः॥ संस्का रव्याप्तेस्तु लौकिकप्रयोगे व्यभिचारो दृश्यते क्वचिद्देशवि शेषे लौकिकव्यवहारे जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते। बर्हिरादाय गावो गता इति। क्रय्यमाज्यमि ति। पुरोडाशेन मेमाता प्रहेलकं ददातीति च। न ज्जातिवा चिनः। प्रयोजनन्तु बर्हिषा यूपावटमवस्तृणातीत्यत्र विना। संस्कारेण रणसिद्धिः॥ अत्र गुरुमतमाह॥

बर्हिरादौ निमित्तस्य दुर्वचत्वान्न मेति चेत्॥
जातेस्तत्र निमित्तत्वात् तद्युक्ता चोदना प्रमा॥२५॥

स खोऽर्थः॥ नवमाधिकर रचयति॥

प्रोक्षणीः सं तिर्जातिर्योगो वा सर्वभूमिषु॥
तथोक्तेः सं तिर्जातिः स्याद्रूढेः प्रबलत्वतः॥२६॥
अन्योन्याश्रयतो नाद्यो न जातिः त्वयशक्तितः॥
योगः स्यात् कृप्तशक्ति न् क्लृप्तिर्व्याकरणाद्भवेत्॥२७॥

दर्शपूर्णमासयोः श्रूयते। प्रो णीरासादयेति। तत्र प्रोक्षणीः श ब्दस्याभिमन्त्रणासाद दिसंस्कृतिः प्रवृत्तिनिमित्तम्। कुतः स र्वेषु वैदिकप्रयोगप्रदेशेषु संस्कृतानामेवापां प्रोक्षणीशब्देनो च्य नत्वादित्येकः पक्षः। लोके जलक्रीडा प्रोक्षणीभिरुद्दु जिताः स्म इत्यसंस्कृतास्वप्सु प्रयोगाद् बर्हिरादिशब्दवज्जा तौ रूढत्वादुदकत्वजातिः प्रवृत्तिनिमित्तम्। न च प्रकर्षेणोक्ष्य न्त आभिरिति योगोऽत्र शङ्कनीयः। रूढेः प्रबल दिति पक्षा न्तरम्। तत्र न तावत् संस्कारो युक्तः। अन्योन्याश्रय त्। विहि तेष्वभिमन्त्रणादिषु संस्कारेष्वनुष्ठितेषु प न संस्कृ स्वप् सु प्रोक्षणीशब्दप्रवृत्तिः। तत् प्रवृत्तौ सत्यां प्रोक्षणीशब्देनापोऽ नूद्य भिमन्त्रणादिविधिरिति। नापि जातिपक्षो यु ः। उदक जातौ प्रोक्षणीशब्दस्य वृद्ध वहारे पूर्वम कृप्तत्वे तेनःपरं शक्तेः कल्पनीयत्वात्। ततो गोशब्दवदश्वकर्णीशब्दवत्त्र रू ढो न भवति। योगस्तु व्याकरणेन क्लृप्तः। सोपसर्गादुक्षतेः क रणे ल्युट्प्रत्ययेन व्युत्पादनात्। तस्मात् प्रोक्षणी शब्दो यौ गिकः। घृतादेः प्रोक्षणत्वं प्रयोजनम्॥ ॥

दशमाधिकरणमारचयति॥

रूढिर्योगो योगरूढिर्वा निर्मन्थ्यस्य वर्त्तनम्॥
द्यौ पूर्ववदन्त्योऽचिरजातेनवनीतवत्॥२८॥

अग्निचयने श्रूयते। निर्मन्थ्येनेष्ट :पचन्तीति। तत्र निर्मन्थ्या शब्दस्य स्वार्थे कीदृशी वृत्तिरिति संशये बर्हिरादिशब्दवत्तौकि

कवैदिकसाधारण्यादृढिर्जाता रूढिरित्येकः पक्षः। अस्यां सोमभ्रवक्तृडेरक्तुमत्वादरणिनिर्मन्थनजन्यत्वाच्च योग इति पक्षान्तरम्। लौकिकनिर्मन्थनेन चिरनिर्मन्थनेन च जन्यं रपितु योगरूढिः पङ्कजादिशब्दवदाश्रयणीया। आधाने निर्मन्थ्य ईप्सनेनित्यं घृतेऽग्निश्चिरनिर्मथितः सद्य एवा लौकिकमन्थनेन जातोऽग्निरचिरनिर्मथितः। तेनेष्टुः पच्यते॥

पुराणानूतनयोर्घृतयोर्नवनीतजन्यत्वे समानेऽपि योगरूढ्या नूतनमेव नावनीतमिति व्यवह्रियते। तद्वत्॥

य दशाधिकरणमारचयति ॥

चातुर्मास्याद्यपर्वण्यो ह्यग्न्याद्यष्टकान्तिके ॥
वैश्वदेवेति शब्दोक्तो गु :संघस्य नाम वा ॥२९॥
नामत्वे रूपराहि दविधिर्गुणता ततः॥
अग्न्यादिभिर्वि ल्प्यते विश्वदेवास्तु सन्तु ॥३०॥
अनूयास्तो यजेतेति ततसंघे नाम वर्णितम्॥
अविधित्वेऽप्यर्थवत्त्वा म प्राक्प्रवणादिषु ॥३१॥
इज्यतेऽत्र यजन्ते वा विश्वे देः इतीदृशी॥
निरुक्तिर्न विकल्पः स्यादुत्पन्नुत्पन्नशिष्टतः॥३२॥

चातुर्मास्ययागस्य च रिपर्वाणि। वैश्वदेवो वरुणप्रघासः साकमेधः शुनासीरीयश्चेति। तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः। आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम्। सावित्रं द्वादशकपालम्। सारस्वतं चरुम्। पौष्णं चरुम् मारुतं सप्तकपालम्। वैश्वदेवीमामिक्षाम्। द्यावापृथिव्यमेककपालमिति। तेषाम तो यागानां सन्निधा विदमाम्नायते। वैश्वदेवेन यजेतेति। न अग्न्यादीन् यागान् यजेतेत्यनूद्य वैश्वदेवशब्देन देव रूपो गुणस्तेषु विधीयते। यद्यपि वैश्वदे मामिक्षायां वि दे :माक्षाद्याग्ये तयागेषु सन्तु यागोऽयमासत्वात् विधीयन्ते। तेष्वग्न्यादिदेवताः सन्तीति चेत्। तर्हि गत्यभावात् तेषु देव विकल्प्यन्ताम्। नामधेयत्वे तु नाममात्र विधेयत्वाद्द्रव्यदेवता।

योरभावेन यागस्यात्र स्वरूपासम्भवात्कल्प्यमानो विधिरनर्थः स्यात्। तस्माद् गुणविधिरिति प्राप्ते ब्रूमः। उत्पत्तिवाक्ये विहितानामाग्नेयादीनष्टौ यागान् यजेत इत्यनूद्याष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते। न च विधित्वाभावेऽपि नामोपदेशवैयर्थ्यम्। प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यादिषु वैश्वदेवशब्देनैकेनैवाष्टानां पंचस्य व्यवहर्त्तव्यत्वात्। नामप्रवृत्तिनिमित्तभूता निरुक्तिर्द्विधा। आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितानामितरेषां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वम्। अथवा विश्वे देवाः अष्टानां कर्त्तार इति वैश्वदेवत्वम्॥ तच्च ब्राह्मणम्। यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमिति। देवताविकल्पस्तु समानबलत्वाभावान्नयुज्यते॥ अग्न्यादय उत्पत्तिशिष्टत्वात् प्रबलाः। विश्वेदेवा उत्पन्नशिष्टत्वाद् दुर्बलाः। तस्माद्वैश्वदेवशब्दः कर्मनामधेयम्। अत्र गुरुमतमाह॥ गुणानामत्वसन्देहादप्रमा चोदनेति चेत्॥

नोक्तन्यायेन संघस्य नामधेयत्वनिर्णयात्॥ ३३॥

षष्ठोऽर्थः॥ द्वादशाधिकरणमारचयति॥

यद् द्वादशकपालेष्टौ वैश्वानर्यामनन्तरम्॥
श्रुतमष्टाकपालादि तद्गुणो नाम वास्तुतिः॥ ३४॥
अन्नाभीवादश्रुतार्नाम स्यादग्निहोत्रवत्॥
द्रव्यं द्रव्यान्तरे नो चेद् गुणास्तर्हि फले त्वसौ॥ ३५॥
वाक्यैक्यमुपसंहाराद् विध्यत्वं तत्तु बाध्यते॥
नानागुणविधौ तस्माद्दशहारादिसंस्तुतिः॥ ३६॥

काम्येष्टिकाण्डे श्रूयते। वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते। यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति। यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति। यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति। यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति। यद् द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति। यस्मिन्जात एतामिष्टिं निर्वपति। पूत एव स तेजस्व्यन्नाद

इन्द्रियावी पशुमान् भवतीति। अत्राष्टत्वादिसंख्यासामान्यात् पुरोडाशादीनां गायत्र्यादिरूपत्वकल्पना कृता। इष्टिविधायके वाक्ये येयं द्वादशसंख्या तस्यामष्टत्वादिसंख्यानामन्तर्भावात्ताः संख्या निमित्तीकृत्याग्निहोत्रशब्दवदष्टाकपालादिशब्दाः कर्मनामधेयानीत्येकः पक्षः। नात्र द्वादशकपालशब्दः संख्यापरः। किन्तु पुरोडाशद्रव्यपरः। द्वादशसु कपालेषु संस्कृत इति व्युत्पत्तेः। एवमेवाष्टाकपालादिशब्दा अपि। तथा सति द्रव्यस्य द्रव्यान्तरेऽनन्तर्भावान्नामधेयस्य निमित्तं नास्तीति चेत्। एवं तर्हि पुरोडाशद्रव्यरूपो गुणो विधीयताम्। नचोत्पत्तिशिष्टद्वादशकपालपुरोडाशावरुद्धत्वादष्टाकपालादेरनवकाश इति वाच्यम्। ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्यपरः पक्षः। अयमप्यनुपपन्नः। बहूनां गुणानां विधौ वाक्यभेदापत्तेः। नच भिन्नान्येवैतानि वाक्यानीति वाच्यम्। वैश्वानरं द्वादशकपालं निर्वपेदिति विहितस्य पुत्रस्मिञ्जाते यतामित्युपसंहारेण वाक्यैकत्वावगमात्। तस्मादंशैर कपालादिभिरंशैर्द्वादशकपालः स्तूयते। अत्र गुरुमतमाह ॥

अगुणत्वादनामत्वादमन्त्रत्वादनन्वये॥
अष्टत्वाद्यप्रमाणं चेन्नार्थवादतयान्वयात्॥३७॥

उक्तरीत्या गुणत्वं नामत्वञ्च न सम्भवति। उत्तमपुरुषामन्त्रणाद्यभावान्न मन्त्रत्वम्। अतोऽष्टाकपालादीनामनन्वयादप्रामाण्यं वाक्यस्येति चेत्। मैवम्। स्तावकत्वेनान्वयस्योक्तत्वात्॥ त्रयोदशाधिकरणमारचयति॥

यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः॥
सामानाधिकरण्यं न स्यादेकस्यान्यनामता॥३८॥
गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते॥
अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः॥३९॥
अर्थभेदादनामत्वं गुणश्चेन्न प्रह्रियेत सः॥
यागसाधकता द्वारा विधेयप्रस्तरस्तुतिः॥४०॥

इदमाम्नायते। यजमानः प्रस्तर इति। तत्र यजमानस्य प्रस्तरशब्दो नामधेयम्। प्रस्तरस्य वा यजमानशब्दो नामधेयम्। कुतः उद्भिदा यजेतेत्यादाविव सामानाधिकरण्यादित्येकः पक्षः। गुणविधिरित्यपरः पक्षः। तत्रापि यजमानकार्य्ये जपादौ प्रस्तरस्य तस्य सामर्थ्याभावाद् गुणत्वं नास्ति। प्रस्तरकार्य्ये स्रुग्धारणादौ यजमानस्य शक्तत्वाद् यजमानरूपो गुणो विधीयते। एवं सति पश्चात्कृतस्य प्रस्तरशब्दस्य कार्य्यलक्षकत्वेऽपि प्रथमश्रुतौ यजमानशब्दो मुख्यवृत्तिर्भविष्यति। न चात्र पूर्वन्यायेन स्तुतिः सम्भवति। अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात्। वायुर्वै क्षेपिष्ठा देवता। ऊर्जोऽवरुध्या इत्यादिवत् स्तुतिरिति चेत् न। क्षिप्रत्वादिधर्मवत् कस्यचिद्गुणस्याप्रतीतेः तस्मान्नामगुणयोरन्यतरत्वमिति प्राप्ते ब्रूमः। गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्नामत्वं न युक्तम्। गुणपक्षे त्वसौ प्रहरणस्य प्रस्तरकार्य्यत्वाद् यजमाने प्रहृते सति कर्मलोपः स्यात्। तस्माद् विधेयः प्रस्तरो यजमानशब्देन स्तूयते यथा सिंहो देवदत्त इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते। तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते। एवं यजमान एककपाल इत्यादिषु द्रष्टव्यम्॥ ॥

॥ चतुर्दशाधिकरणमारचयति ॥ ॥

आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत् सर्वनिर्णयः।
हारन्तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे॥ ४१॥

इदमाम्नायते। आग्नेयो वै ब्राह्मण इति। अत्रात्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न ब्राह्मणस्य नामधेयम्। नाप्यग्निदेवतारूपो गुणो विधीयते। आग्नेयं सूक्तमाग्नेयं हविरित्येवं देवतातद्धितस्य सूक्तहविर्विषयत्वान्न ब्राह्मणः सूक्तम्। नापि हविः। अतः सम्बन्धवाचितद्धितान्तेनाग्नेयशब्देन ब्राह्मणः स्तूयते। यद्यपि ब्राह्मणेनाग्निसम्बन्धः तथाप्यग्निसम्बन्धो मुखजन्यत्वगुणो

ब्राह्मणो विद्यते। तथा चापि ब्राह्मणाग्नयोर्मुखजन्यत्वं कस्मिंश्चि-
दर्थवादे समाम्नायते। प्रजापतिरकामयत प्रजाः सृजेयेति। स
मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवतान्वसृज्यत गायत्री छ-
न्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनाम्। तस्मा-
त्ते मुख्याः। मुखतो ह्यसृज्यन्तेति। तस्मादाग्नेयशब्दः स्तावकः।
एवमैन्द्रो राजन्यो वैश्यो वैश्वदेव इत्यादिषु द्रष्टव्यम्॥

पञ्चदशाधिकरणमारचयति॥

आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः॥
दूरं चाक्षुषसारूप्यं घृताक्ते तेजसोऽस्ति तत्॥४२॥

आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद्यूपेऽप्यस्ति। घृताक्तस्य यू-
पस्य तेजस्वि ध्यवसायात्। तत आदित्यशब्देन यूपः स्तूयते
। एवं यजमानो यूप इत्यत्र चक्षुर्गम्यस्यौर्ध्वत्वस्य समानत्वा-
द् यजमानशब्देन यूपः स्तूयते॥ षोडशाधिकरणमारचयति।

पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम्॥
अजादिष्वपशुत्वं यद्गुणो वादोऽथवास्तु तत्॥४३॥
स्तुत्यभावाद्गुणस्तेषु पशुकार्य्यनिषेधनम्॥
अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना॥४४॥
पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः॥
स्तुत्यास्तत्र निमित्तन्तु प्रशंसैव गवाश्वयोः॥४५॥

इदमाम्नायते। अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वा इ-
ति। तत्राजादिषु श्रूयमाणं यदपशुत्वं तस्यार्थवादत्वं न सम्भव-
ति। पशुत्वनिषेधमात्रेण स्तुतेरभावात्। ततः पशुकार्य्यनिषेध-
रूपो गुणो विधीयत इति चेत्। मैवम्। अजादिपशुविधिवैय-
र्थ्यप्रसङ्गेन निषेद्धुमशक्यत्वात्। अपशुशब्दः पशुव्यतिरिक्तं घ-
टादिपदार्थमभिधत्ते। तस्मिन्। घटादौ गवाश्ववत् प्राशस्त्यं
। नास्ति। सोऽयं प्राशस्त्याभावोऽजादिषु पशुषु अस्तीत्यनेना-
भिप्रायेण पशव एव सन्तोऽप्यजादयो घटादिसाम्यादपशुशब्देन
लक्ष्यन्ते। पूर्वत्र यजमान र्थ्यसिद्धिराग्नेये मुखजत्वम्। आदि

त्यवतेजस्वित्वं च यजमानादिशब्दानां प्रस्तराद्यर्थेषु प्रवृत्तिनि-
मित्तम्। तत्प्रवृत्तिफलं प्रस्तरादिप्रशंसा। इह त्वपशुशब्दस्या-
जादिषु प्रवृत्तौ गवाश्वयोः प्रशंसैव निमित्तं फलञ्च। द्विप्रकारा-
हि प्रशंसा। वस्तुनि विद्यमानगुणोत्कर्ष एक प्रकारः। स्तावकेन
शब्देन समारोपितो गुणोत्कर्षोऽपरः प्रकारः। गवाश्वयोरजादि
भ्य उत्कर्षो लोकसिद्धो यः सोऽत्र निमित्तम्।

अजादयः स्वभावतः पशवोऽपि सन्तो गवाश्वौ प्रत्यपश-
वः सम्पन्नाः। ईदृशो गवाश्वयोर्महिमेति स्तुतिः फलम्। तस्माद
पशवो वा इत्ययमर्थवादः। अयमेव न्याय उदाहरणान्तरेऽपि
योजनीयः। अयज्ञो वा एष योऽसामेत्येकमुदाहरणम्। असत्त्रं
वा एतद्यदच्छन्दोममित्यपरमुदाहरणम्। अग्निहोत्रदर्शपू-
र्णमासादिर्यज्ञोऽपि सामहीनत्वादयज्ञो भवति। ईदृशः साम्नो
महिमा। छन्दोमशब्देन चतुर्विंशश्चत्वारिंशोऽष्टाचत्वारिंश इत्ये
ते त्रयः स्तोमा उच्यन्ते अक्षरसं साम्येन गायत्रीत्रिष्टुब्
जगतीछन्दोभिर्गीयमानत्वात्तेषां विष्टुतिः साम। णो द्रष्ट
व्या। अतः सत्त्रमपि चतुर्दशरात्रादिकं छन्दोमरहितत्वादस
त्त्रं भवति। ईदृशश्छन्दोमानां महिमेत्येवं स्तावकत्वादर्थवादत्वम्।

॥ सप्तदशाधिकरणमारचयति॥

स्पृतोरुपदधातीति ये मन्त्राः स्पृल्लिङ्गकाः॥
विधेयास्ते गुणत्वेन वादो वात्र गुणे विधिः॥५६॥
आख्यातेनाभिसम्बन्धाद्विध्यन्तरयोगतः॥
लिङ्गप्रकरणप्राप्ते मन्त्राणां विध्यसम्भवात्॥५७॥
नाननुवाद्य धानं विदध्यात्स्तोष्यते यतः॥
यथा स्पृत्येत्यनेनातः स्पृतीरि र्थे रणीः॥५८॥
एकयास्तुवतेत्यादौ मन्त्रसंघे क्वचिन्नहि॥
स्पृच्छब्दस्तथाप्युक्तिः स्पृच्छब्देन भूमतः॥५९॥

अग्निचयने श्रूयते। स्पृतीरुपदधातीति। स्पृच्छब्दोपेता मन्त्रा॥
यासामिष्टकानामुपधाने विनियुज्यन्ते ता इष्टकाः स्पृतय इत्युच्यन्ते॥

सृष्टिनामासामुपधाने मन्त्र इति विगृह्य तद्धानासामुपधान इत्यादिव्याकरणसूत्रसिद्धप्रक्रियया सृष्टिनिष्पादनात्। सृष्टिशब्दोपेतानामुपधानमन्त्राणामेकया स्तुवतेत्यस्मिन्ननुवाके समाम्नाताः। ब्रह्मासृज्यत भूतान्यसृज्यन्तेत्यादिना सृजतिधातोस्तेषु प्रयुक्तत्वात् ते मन्त्रा अत्र सृष्टिशब्देनोपधाने गुणत्वेन विधीयन्ते। कुतः। उपदधातीत्यनेनाख्यातेनाभिसम्बन्धात्। न चार्थवादत्वमस्य सम्भवति। विध्यन्तरेण सहैकवाक्यत्वाभावादिति प्राप्ते ब्रूमः। अग्निचयनप्रकरणे पठितत्वात्तेषां मन्त्राणां सामान्यतश्चयनसम्बन्धोऽवगम्यते। विशेषसम्बन्धः सृजतिलिङ्गादवगन्तव्यः। तथा सति प्राप्तत्वान्न ते मन्त्रा अत्र विधीयन्ते। किन्तु तान् मन्त्राननूद्येष्टकोपधानं विधीयते। सृष्टिशब्देनानुवादस्तु वक्ष्यमाणार्थवादोपपत्त्यर्थः। यथा सृष्टमेवावरुन्ध इति वक्ष्यमाणोऽर्थवादः। यदि विधिवाक्ये मन्त्राणामनुवादकः सृष्टिशब्दो न स्यात्। तदानीमर्थवादे सृष्टिशब्दः प्रयोगाद् विध्यर्थवादयोर्वैयधिकरण्यभ्रमः स्यात्। तस्मान्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः किन्त्वर्थवादः। ननु प्रथममन्त्रे सृजतिधातुर्न प्रयुक्तः। एकयास्तुवत। प्रजा अधीयन्तेति तत्पाठात्। बाढम्। तथापि द्वितीयादिषु बहुषु मन्त्रेषु सृजतिधातुप्रयोगाद् भूमरूपं सादृश्यमस्ति। यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि तत्र यथा सृष्टिभूमता तथात्रापीति भूमगुणयोगेन सर्वस्य सृष्टिसंघस्य सृष्टिशब्दप्रयोगः॥ अथ दशमाधिकरणमारचयति॥

सृष्टिवत्प्राणभृत्तत्र सादृश्यं लिङ्गभूमतः॥
अत्रैकमन्त्रगं लिङ्गं समवायो विशि ते॥५०॥

प्राणभृत उपदधातीत्यत्रापि सृष्टिन्यायेन मन्त्रविधिरिति॥ पूर्वपक्षः। लिङ्गप्रकरणप्राप्तमन्त्रानुवादेनेष्टकोपधानविधिः। तस्यैव प्राणान् दधातीत्यस्य वक्ष्यमाणार्थवादस्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः। पूर्वत्र द्वितीयादिमन्त्रेषु सृष्टिलिङ्गबाहुल्यम्। इह तु प्रथममन्त्र एव प्राणभृल्लिङ्गमाम्ना-

यते। अयं पुरो भुवस्तस्य प्राणो भौवायन इत्येकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि तत्त्रिणो गच्छन्तीति वत्तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते। तदेवं यजमान र्थ्य सिद्ध्यादयो गुणवृत्तिहेतवो निर्णीताः।त । चोक्तम्। तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः।षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्र त्यते ति॥ ।।एकोनविंशाधिकरणमारचयति॥ ॥

शर्करा उपधत्ते। तेजो वै घृतमत्र किम्॥
तैलादिनाक्तिता घृतेनै. वाक्तनम्॥५१॥
तै दिनापि मुख्य त्वं तविरोध त्॥
अ र्थत्वतश्चास्य विधेर्वादाद्बलि तः॥५२॥
सामान्यमननुष्ठेयं विशेषस्तु विधौ नहि॥
घृतेनै क्तत्व वाक्यशेषात् संदिग्धनिर्णयात्॥५३॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी॥
बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम्॥५४॥

अ ः शर्करा उपदधाति तेजो वै घृतमिति श्रूयते। मृत्ति मिश्राः क्षुद्रपाषाणाः शर्कराः। अ घृततैलवसादीनामन्यतमे न द्रव्येण नीयाः। कुतः। अक्तन साधनसामान्यबोधकस्य विधि स्य घृतविशेषबोधकादर्थ दात्प्रबलत्वात्। तत्प्राबल्ये च मुख्य त्वस्त्रयो हेतवः। स्वार्थेन धेर्मुख्यत्वम्। प्रथमश्रुतत्वाच्चासंजातविरोधित्वम्। अनधिगतार्थबोधकत्वादप्रामाण्यत्वम्। र्थ दस्तु विधिस्तावकत्वान्नमुख्यः। चरमश्रुत त्सञ्ज्ञानविरोधी। ज्ञा र्थानुवादि त्॥ प्रा र्थः।त द्येन केनाप्य तमिति से ब्रूमः। विधिवाक्येन किमक्तनसामान्यं विधीयते तद्विशेषो । नाद्यः सामान्य ननुष्ठेय त्। न द्वितीयः घृततै दिविशेष वकशब्दाभा त्। ततः उ री प्रबलमपि विधिवा मनुष्ठतयोग्ये शेषे सन्देहजनन त्वान्निर्णयहेतुमर्थ दमपेक्षते। ननु तेन सह विरुध्यते। अर्थ देऽपि घृतस्य विधिना

स्तीति चेत् न विधेरुन्नेयत्वात्। तेजो वै घृतमित्येवं तेजस्त्वेन घृतस्य स्तूयमानत्वाद् विधेयत्वं गम्यते। स्तयोरु विधीयत इति न्यायात्। तेन विधेयत्वेन विधायकः शब्दः कल्प्यते घृतेनाक्ता इति। तस्माद् घृतेनैवा नम्॥ विंशाधि रणमारचयति॥ ॥

स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यमी ॥ ॥
आज्ये मांसे पुरोडाशे संकीर्णा वाव्यस्थिताः॥५५॥
व्यवस्थापकराहित्यात्स्रुवा अव्यवस्थिताः॥
व्यवस्थाप नाशक्ते स्तद्दृशेन व्यवस्थितिः॥ ५६॥

स्रुवेणावद्यति। स्वधितिनावद्यति। हस्तेनावद्यतीति श्रूयते। अत्राव देयेष्वाज्यमांसपुरोडाशेषु हविःष्वमी स्रुवाद्या अवदानहेतवः संकीर्णाः कुतः। व्यवस्थाप कशब्दस्याभावादिति चेत्। मैवम्। शक्ते र्व्यवस्थापकत्वात्। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात्। कटे भुङ्क्ते कांस्यपात्र्यां भुङ् इत्यत्र लौकिकास्तत्तद्वस्तु शक्त्यनुसारेण व्यवस्थां कल्पयन्ति। कट सीनः कांस्यपात्र्या मोदनं निधायेति। वेदेऽप्य लिना सक्तून् प्रदाव्ये जुहु दित्य त्र यद्यपि द्विहस्तसंयोगोऽञ्जलिस्तथापि गुरुदेवतादिप्रसादना र्थो लिवच्छिद्रसंयोगो नभवति। तादृशेऽञ्जलौ सक्तूना मवकाशाभावात्। अतः सामर्थ्यात् संपु प्रसृतिद्वयात्मको मध्य गतावकाशोपेतोऽञ्जलिर्गृहीतः। एवमत्रापि द्रवद्रव्यस्याज्यस्य स्रुवो योग्यः। छेदनीयमांसस्य शस्त्रविशेषः स्वधितिः। संहतस्य पुरोडाशस्य हस्त इत्यनेन प्र रेण स्रु वस्थिताः॥६

इति माधवीये जैमिनीयन्यायमाला
विस्तरे प्रथम ध्यायस्य च
तुर्थः पादः। समाप्तश्च
प्रथमोऽध्यायः॥

## द्वितीयोऽध्यायः ॥ ॥

प्रमाणमुपजीव्यत्वात्प्रथमेऽध्याय ईरितम् ॥
मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ॥१॥

अनेन प्रथमद्वितीययोरध्याययोः पूर्वोत्तरभावः उपपादितः॥ द्वितीयाध्यायस्य प्रथमपादे प्रथ धिकरणे प्रथमवर्णकमारचयति॥

विधिवाक्ये पदैः सर्वैरपूर्वं प्रति घते ॥
प्रत्येकमथवैकेन सर्वैस्तत्प्रतिपादनम्॥१॥
फलान्वयि न सर्वेषां प्र नान्वयलाभतः॥
लाघवादेकबोध्यत्वं तच्छेषस्तु पदान्तरम्॥२॥

विधि क्यमदृष्टार्थमखिलमत्रोदाहरणम्। विधि क्येपावन्ति पदानि सन्ति नि सर्वाणि क्रिया रकसम्बन्धमनादृत्य प्रत्ये कमपूर्वस्य प्रतिपादक नि। कुतः। अपूर्वस्य फलत्वेन सर्वे प दानां फलान्वयित्वात्। अपूर्वप्रतिपादनाभावेऽपि क्रिया र योः परस्परान्वयोऽस्त्येवेति चेत्। सत्यम्। तथापि प्रधा न्वयो॥ लभ्यते। फलं हि प्रधानम्। पुरुषार्थतया साध्यमानत्वादिति प्रा प्ते ब्रूमः। अपूर्वस्यात्यन्तमदृष्टत्वादेकस्य तयैव वाक्यस्योपपत्ता वनेककल्पने गौरवं त। तस्मादेकमपूर्वमेकेन शब्देन प्रति पाद्यते। पदान्तरन्तु तच्छेष तयान्वेति। ननु य पदस्यार्थोऽपूर्व स्य कल्पकस्तत्पदार्थस्य फलसाधनतया फलं प्रत्युपादेयत्ववि धेयत्वगुणत्वान्यस्युपगन्त नि। तथा तस्यैव शेषभूतपदान्त रार्थं प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानामपि प्राप्तत्वाद्विरुद्धत्रि करूपापत्तिरिति चेत्। मैवम्। उद्भिदा यजेत पशुकामः। श्येनेनाभि चरन् यजेतेत्यादावुद्भिदादिशब्दानां नामत्वे नान्वये स यागा साधनवाचित्वाभावेन यजतावुद्देश्यत्वादित्रिकापादकत्वाभावा त्। तस्मादेकमेव पदमपूर्वप्रतिपादकम्। न च धर्मभेदचिन्तां प्रस्तु तां परित्यज्य किमित्यपूर्वं चिन्त्यत इति वाच्यम्। अपूर्वस्यैव धर्म त्वात् ॥ ॥ द्वितीयवर्णकमारचयति ॥ ॥

द्र॰ दिशब्दतोऽपूर्वधीर्भावार्थपदात्तु न॥
द्रव्यादीनां फलार्थत्वात्तच्छब्दैर्न ह्यपूर्वधीः॥३॥
क्रि हारभूते द्रव्यं फलेन न हि युज्यते॥
भावना चितोऽपूर्वमाख्यातादवगम्यते॥४॥
धात्वर्थव्यतिरेकेण भावना नेति चेन्न तत्॥
सर्वधात्वर्थसम्बन्धः रोत्यर्थो हि भाव ॥५॥
धात्वर्थः स्त्रां न समानपदवर्तिनः॥
द्र॰ गुण विद्दै धात्वर्थोनपादः त्मि ॥६॥

द्र॰ यते। सोमेन यजेत। हिरण्यमात्रेयाय ददाति। तस्मा त॰ वर्णं हिरण्यं भार्य्यम्। श्येनेनाभिचरन् यजेत। चित्रया यजेत पशु॰ द्र॰ दि। तत्र सोमहिरण्यशब्दौ द्रव्य चितो। सुवशब्दो गुणवाची। श्ये नचि शब्दौ र्मवाचितो। तैरेतैर्द्रव्यादिशब्दैरपूर्वं प्रत्येति। कुतः। द्र॰ दी सिद्धरूपाणां साध्यं फलं प्रति साधनत्वसम्भ न॥ यागदानादिरूपस्तु भा र्थः स्वयमपि॥ फलवत् साध्यरूपत्वान्न साधनं भवितुमर्हति। ततो द्रव्यादीनां प्रति करणत्वाद् द्र॰ दिशब्दा पूर्वप्रत्यायका इति प्राप्ते ब्रूमः। क्रियां वि द्र॰ णि फलं साधयितुं न क्षमन्ते। पचिक्रियामन्तरेण ष्ठस्थाल्यादीनामोदनसाधकत्वादर्शनात्। अतो भाव चिनायजतिददातीत्याख्यातेनापूर्वं प्रतीयते। ननु धात्वर्थ एव भावना तदन्या वा। न तावद्धात्वर्थः। तस्यतां प्रति करणत्वोक्तेः। न द्वितीयः। धात्वर्थव्यतिरिक्तायाः क्रियाया दुर्लक्ष्य दिति चेत्। मैवम्। सर्वधात्वर्थसम्बद्धरूपेण लक्षयितुश तत्। तदुक्तमाचार्य्यैः। धात्वर्थ व्यतिरेकेण यद्यप्येषा न लक्ष्यते। तथापि सर्वसामान्यरूपेणैवावगम्यत इति। अन्यैरप्यु म्। सिद्धसाध्य स्वभा भ्यां धात्वर्थो द्विविधस्तयोः। अन्योपादानुकू त्या भावना साध्यरूपिणीति। पचतीत्युक्ते पाकं करो त्येतमर्थं सर्वे जनाः प्रतियन्ति। तत्र पाकः पक्तिः पचनमित्येतैः ब्दैर्व्यवह्रिय णो लिङ्ग रकसंख्यायोग्यो धात्वर्थः।

सिद्धस्वभावः। करोतीत्यनेन व्यवह्रियमाणो लिङ्गाद्यर्थेनः साध्य स्वभावः। तत्र सिद्धस्वभावद्योतनाय यथा यज प्रत्ययादयो विहिताः तथा साध्यस्वभावद्योतनाया ख्यात प्रत्ययविधिः। स चाख्यातप्रत्ययार्थ ओदनोत्पत्तेरनुकूलः। ततो भवितुरोदनस्य प्रयोजकव्यापारत्वात्तस्मिन्ननेन भावनाशब्देनोच्यत इत्यन्ये भावनापक्षा अयुक्ताः। प्रयत्नो भावनेति चेत्। न। रथो गच्छतीत्यत्र तदभावप्रसङ्गः। स्पन्द इति चेत्। न। मानसत्यागरूपे यजता वव्याप्तेः। उभयसाधारणमुदासीनत्वविच्छेदसामान्यं भावनेति चेत्। शब्दभावनायामव्याप्तिः। न हि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वास्ति। लिङ्लेट्लोट्तव्यप्रत्ययमात्रगता शब्दभावना। सर्वाख्यातगतार्थभावना। तदुक्तम्। अभिधाभावनामाहुर मेमेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते॥ इति। किञ्च। स्पन्दादिवादिनोऽपि न स्वरूपेण स्पन्दादीनां भावनात्वमाहुः। किन्त्वन्योत्पादानुकूलं स्वरूपम्। तस्मात् इत्थमेव भावना यथा पचतीत्यत्रौदनफलोत्पत्त्यनुकू। न य तीत्यत्र स्वर्गादिफलोत्पत्त्यनुकूला। तस्यां च फलभावनायां प्रत्ययवाच्यायामेकपदोपात्तत्वेन प्रत्यासन्न त्प्र त्यर्थः करणम्। न तु द्रव्यादि। तस्य पदान्तरोपात्तत्वेन विप्र कृष्टत्। साध्यरूपोऽपि प्रकृत्यर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम्। द्रव्यादीनां तु प्रकृत्यर्थोत्पादनेन दृष्टः सर्वोपकारः। द्रव्यादिनिष्पादितेन साधुवाच्येन यागादिकरणेन स्वर्गादिफलोत्पत्तौ सत्यां येयमनुकूलव्यापारात्माकृति शब्दाभिधेया फलोत्पादना सेयं यज्यादिधातूनामन्यतमेन केनापि नाभिधीयते। सर्वधात्वर्थानुयायित्वात्। अतो न भावनायाः प्रकृत्यर्थत्वमाशङ्कितुं शक्यम्। अस्तु तर्हि धा र्थ सामान्यमेव भावनेति चेत्। न। प्रति धात्वर्थं विलक्षणरूपत्वात्। अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यम्। अन्यच्च चलनस्य संयोगविभागौ प्रति। अन्यथा फलविभागानुपपत्तेः॥ भि

सु भावनाव्यक्तिषु भावनात्वसामान्यमनुवर्त्तते नाम। नैतावता प्रकृत्यर्थसामान्यं तद्भवति। तस्माद् विशेषरूपात् सामान्यरूपाच्च यज्यादिधातुवाच्यादन्यैवाख्यातप्रत्ययवाच्या भावना तथा सति यजेतेत्यत्राख्यातस्य भावयेदित्यर्थो भवति। तत्र किंभावयेत् केन भावयेत् कथं भावयेदित्याकाङ्क्षायां स्वर्गं भावयेद् यागेन भावयेदग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं सम्पाद्य। भावयेदित्येवं भाव्यकरणेतिकर्त्तव्यतासमर्पणेनाकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्दसन्दर्भो भावनावाचिन आख्यातस्यैव प्रपञ्चः। भाव्याद्यंशत्रयवती सेयमर्थभावनेत्युच्यते॥ सा सर्वापि शब्दभावनाया भाव्या। विधाय लिङ्गादिः करणम्। अर्थवादसम्पादिता स्तुतिरितिकर्त्तव्यता। सेयं शब्दभावना लिङ्गादिभिरेव गम्यते। अर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यत इत्युक्तम्। तत्रार्थभावनायां स्वर्गस्य भाव्यत्वं कर्मयोगादवगम्यते। प्रकृत्यर्थस्य करणत्वं तृतीयाश्रुत्या। तथा च श्रूयते। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत। चित्रया यजेत पशुकाम इति। न च करणत्वमपूर्वकल्पनामन्तरेण न सम्भवतीत्यभिधास्यते। तस्मादाख्यातप्रत्ययान्ताद् भावार्थपदादपूर्वं गम्यते। चिन्ताप्रयोजनन्तु। पूर्वपक्षे द्रव्याद्यपचारे प्रतिनिध्यभावः। सिद्धान्ते तु तत्सद्भाव इति॥ द्वितीयाधिकरणमारचयति॥

अपूर्वं सदसद्भावसंशये सति नास्ति तत्॥
मानाभावात् फलं यागात् सिध्येच्छास्त्रप्रमाणतः॥७॥
क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम्॥०
विरुद्धं मान्तरेणातः श्रेयोऽपूर्वस्य कल्पनम्॥८॥
अ न्तरव्यापृतिर्वा शक्तिर्वा यागजोच्यते॥
अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम्॥९॥

पूर्वाधिकरणे वर्णकाभ्यां यदिदमुक्तमपूर्वस्य कर्मैव पदं प्रत्यायकं तच्च यजेतेत्याख्यातान्तभावार्थपदमिति तदनुपपन्नम्। अपूर्वसद्भावे मानाभावात्। यजेतेत्याभ्यां प्रकृतिप्रत्ययाभ्यां-

करणाभावनयोरभिधानात्। अपूर्वाभावे कालान्तरभाविस्वर्गसाधनत्वं विनश्वरस्य यागस्यानुपपन्नमिति चेत्। न। शास्त्रप्रामाण्येन तदुपपत्तेरिति प्राप्ते ब्रूमः। दर्शपूर्णमासाभ्यामिति तृतीयाश्रुत्या तावद्यागस्य स्वर्गसाधनत्वं प्रमितम्। तद्यथोपपद्येत तथावश्यं भवतापि कल्पनीयम्। तत्र किं यावत्फलं यागस्यावस्थानं कल्प्यते। किं वा विनष्टस्यापि स्वर्गोत्पादनम्। नाद्यः। यागे क्षणिकत्वस्य प्रत्यक्षसिद्धत्वात्। न द्वितीयः। मृतयोर्दम्पत्योः पुत्रोत्पत्त्यदर्शनात्। अतो मानान्तरविरुद्धत्वदीयकल्पनादस्मदीयमविरुद्धमपूर्वकल्पनं न्याय्यम्। कल्पितेऽप्यपूर्वे तस्यैव स्वर्गसाधनत्वात् यागस्य स्वर्गसाधनत्वश्रुतिर्विरुध्येतेति चेत्। न। यागावान्तरव्यापारोऽपूर्वमित्यङ्गीकारात्। नह्युद्यमननिपतनयोरवान्तरव्यापारयोः सत्त्वे कुठारस्य साधनत्वमपैति। यद्व्यापारवतो यागस्य नाशे व्यापारो न तिष्ठेत् तर्हि यागजन्या काचिच्छक्तिरपूर्वमस्तु। शक्तिव्यवधानेऽपि यागस्य साधनत्वमविरुद्धम्। औष्ण्यव्यवहितेऽप्यग्नौ दाहकत्वाङ्गीकरात्। यथाङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्त्तते। तथा यागजन्यमपूर्वं नष्टेऽपि यागे कर्त्तर्य्यात्मन्यनुवर्त्तताम्। तस्मादस्त्यपूर्वम्। तद्विशेषस्तु सम्प्रदायसिद्धयागप्रक्रिययावगन्तव्यः। तथा हि प्रक्रिया पूर्वाचार्य्यैरित्थं दर्शिता। प्रथमं तावत् फलवाक्ये न कर्मणः फलसाधनता बोध्यते। यागेन स्वर्गं कुर्य्यादिति। कथं विनश्वरेण फलं कर्त्तव्यमित्यपेक्षायामपूर्वं कृत्वेत्युच्यते। कथमपूर्वं क्रियत इत्यपेक्षायां यागानुष्ठानप्रकारेणेति। तच्चापूर्वं दर्शपूर्णमासयोरनेकविधम् ———

——— । फलापूर्वं समुदायापूर्वमुत्पत्त्यपूर्वमङ्गापूर्वञ्चेति। येन स्वर्ग आरभ्यते तत् फलापूर्वम्। अमा स्या त्रयाणां यागानामेकः समुदायः। पौर्णमास्यामपरः। तयोर्भिन्नकालवर्त्तिनोः संहत्य फलापूर्वाभा योगात्तदार

ाय समुदायद्वयजन्यमपूर्वद्वयं कल्पनीयम्। नयोरेकैकस्या
भायैकैकसमुदायवर्तिनां त्रयाणां यागानां भिन्नः॥स्वणाव।
ात्वेन संघातापत्त्यभावा गत्रयजन्यानि त्रीरायुत्पत्त्यपूर्वा
ा कल्पनीयानि। तेषामङ्गोपकारमन्तरेणा निष्पत्तेरङ्गानांच।
कस्णावर्त्तिनां संघातासम्भ दङ्गापूर्वाणि कल्पनीयानि।तत्र
यं विभागः।सन्निपत्योपकारः एवघातादीनि द्रव्यदेवतासं
ारद्वारेणा यागस्वरूपस्यैवातिशयाधानेन तदुत्पत्त्यपूर्वे नि।
ौ प्रियन्ते। तद्द्वारेणाफलापूर्वे आरादुपकारः । त्तु
याजादीन्युत्पत्त्यपूर्वेभ्यः फलापूर्वे निष्पत्तौ साक्षादेव व्याप्रि
ते।एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गान्यपूर्वनिष्पत्तावनुग्रा
काणीत्येकरूपेणोत्थे भावेन स्वीक्रियन्ते।अनयैव दिशा स
त्रापूर्वप्रक्रिया वगन्तव्या अत्र गुरुमतमाह॥ ॥

याग क्रिया सूक्ष्मरूपा परमाण्वात्मसंश्रिता॥
यावत्फलं नियोगाख्यं नापूर्वमिति चेन्न तत्॥१०॥
मानहीनं क्रियासौक्ष्म्यं नियोगस्तु लिङादिना॥
अभिधेयःपृथग्यागादपूर्वं कार्य्यमस्यतः॥११॥

रूणा यन्नियोगाख्यमपूर्वमभिप्रेयते तन्नास्ति।कुतः।अन्त
ेव तदपूर्वं फलनिष्पत्तेः। नच यागनाशात् र्थं फलसि।
ृरिति वाच्यम्। न हि यागक्रिया सर्वात्मना नश्यति। किन्तु।
क्ष्मरूपत्वे नादृश्या सती स्वर्गदेहारम्भकेषु यागसम्बन्धिद्र
ागतपरमाणुषु यागकर्त्तर्य्यात्मनि वावस्थाय फलमारभत
ते पूर्वपक्षः।तेनयुक्तम्। उक्तेऽर्थे प्रमाणाभावात्।नच नियो।
ापि मानाभावः शङ्कनीयः। वैदिकलिङादीनां तदभिधायका।
त्।ततो धात्वर्थातिरिक्तं लान्तरभाविकाम्यफलसाधन
पूर्वमस्ति॥ तृतीयाधिकरणामारचयति॰ ॥ ॥

अवघातादिनापूर्वमुत्पाद्यं विद्यते न ॥
यजत्यादिवदस्यैव वाक्यवैयर्थ्यमन्य ॥१२॥
दृष्टे तुषविमोके तत्नापूर्वं द्रव्यतन्त्रतः॥

स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्वचः ॥ १३ ॥

दर्शपूर्णमासयोः श्रूयते। व्रीहीनवहन्ति। तण्डुलान्पिनष्टीति। तत्रावघातपेषणे अपूर्वजनके। विहितधात्वर्थत्वाद् यजत्यादि धात्वर्थवत्। विपक्षे विधिवाक्यवैयर्थ्यरूपो बाधकस्तर्कोऽवगन्तव्यः। तुषविमोकचूर्णत्वयोर्दृष्टप्रयोजनयोर्लोकसिद्धत्वेन तादर्थ्येऽवघातपेषणयोर्विधिर्व्यर्थः स्यात्। तस्मादस्त्यपूर्वमिति। मैवं ब्रूमः। दृष्टफले सम्भवत्यपूर्वं न कल्पनीयम्। यजत्यादिदृष्टान्तस्तु विषमः। तत्र हि क्रियाप्राधान्ये तद्द्रव्यपारतन्त्र्याभादपूर्वसाधनत्वं क्रियाया युक्तम्। इह तु व्रीहीनिति कर्मकारक विभक्त्या व्रीहीणामीप्सिततमत्वेन प्राधान्यावगमाद् द्रव्यपरतन्त्रोऽवघातो द्रव्य एवातिशयं कुर्यात्। न त्वपूर्वं जनयति न च विधिवैयर्थ्यम्। नखनिर्भेदादिना तुषविमोकसम्भवेऽप्यवघातेनैवासौ कर्तव्य इति यो नियमस्तस्य नियमस्यापूर्वहेतुत्वेन विधेयत्वात्। तस्मान्नास्त्यवघातादिजन्यमपूर्वम् ॥ अत्र गुरुमतमाह ॥

द्वितीयां सक्तुवद्भङ्क्त्वा नियोगेऽन्वीयतां क्रिया ॥
साक्षादिति न मन्तव्यं दृष्टस्यात्रोपपत्तितः ॥ १४ ॥

सक्तूञ्जुहोतीत्यत्र द्रव्यप्राधान्यं परित्यज्य द्वितीयाया भङ्क्त्वा क्रियाप्राधान्याय सक्तुभिर्जुहोतीति तृतीयात्वेन विपरिणामो वक्ष्यते। तथा व्रीहिभिरवहन्तीति विपरिणामेन प्रधानभूत क्रिया द्रव्यव्यवधानमन्तरेण साक्षादेव नियोगेऽन्वेत्विति चेत्। मैवम्। वैषम्यात्। तत्र होमेन सक्तुषु संस्कारो न सम्भव। भस्मीभूतानामन्यत्र विनियोगासम्भवात्। इत्यभिप्रेत्य संस्कारकर्मत्वं परित्यक्तम्। इह दृष्टस्तुषविमोकसंस्कार उपपद्यते। वितुषाणां तेषां पुरोडाशे विनियोगसम्भवात् ॥ ॥

चतुर्थाधिकरणमारचयति ॥

संमार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता ॥
गुणकर्मत्वमथवा दृष्टाभावेऽवघातवत् ॥ १५ ॥
गुणत्वं नहि सम्भाव्यं प्राधान्यं तु प्रयाजवत् ॥

अदृष्टकल्पनेनापि गुणत्वं स्याद् द्वितीयया॥ २६॥

दर्शपूर्णमासयोर्जुह्वादीनां दर्भैः सम्मार्जनमाम्नायते। स्रुचः सं मा ति। तत्र संमार्जनं प्रधानकर्म। कुतः। गुणकर्मलक्षणरहितत्वात् प्रधानकर्मलक्षणयुक्तत्वाच्च। सूत्रकारो हि कर्मणां राशिद्वयं प्रति य तयोर्लक्षणं पृथक् सूत्रयामास। तानि द्वैधं गुणप्रधानभूतानि। येस्तु द्र विकीर्ष्यते गुणास्तत्र प्रतीयेत। तस्य। द्रव्यप्रधानत्वात्। येस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि। द्रव्यस्य गुणभूतत्वादिति। यैः कर्मभिर्द्रव्यमुत्पादयितुं संस्कर्तुं वेष्यते तेषु कर्मसु गुणत्वम्। कुतः। तस्य कर्मणो द्र प्रधान त। द्रव्यं प्रधानमस्येति बहुव्रीहिः। यूपं तक्ष हवनीयमादधातीत्यादौ यूपाहवनीयादिद्रव्यमुत्पादयितुमिष्यते। व्रीहीनवहन्ति तण्डुलान् पिनष्टीत्यादौ व्रीह्यादिद्रव्यं संस्कर्तुमिष्टम्। प्रयाजादिषूक्तवैपरीत्यात् प्रधानकर्मत्वम्। एवं स व तेन यथा व्रीहीणां तुषविमोको दृष्टः संस्कारः तथा सं र्जनेन जुह्वादिषु कश्चिदतिशयं न पश्यामः। अतोऽवघातव णकर्मभावात् प्रयाजादिवत् प्रधानकर्मत्वमिति प्राप्ते ब्रूमः। स्रुच इति द्वितीया कर्म रके विहिता। कर्मत्वं चेप्सिततमत्वे सति भवति। कर्त्तुरीप्सिततमं कर्मेति कर्मसंज्ञाविधानात्। क्रतुसाधनत्वेन वस्तु युक्तमीप्सिततमत्वम्। अतः प्रधानभूताः स्रुचः। तथा सति संमार्जनक्रियाया गुणकर्मत्वमवघातवद्भविष्यति। यदि दृष्टोऽतिशयो न स्यात्। तर्ह्यपूर्वं कल्पनीयम्॥

षष्ठमाधिकरणमारचयति॥

प्रउगं शंसती रौ गुणतोत प्रधान ॥
दृष्टादेवस्तुतिस्तेन गुणता स्तोत्रशस्त्रयोः॥ २७॥
स्तुत्यर्थत्वे स्तौति शंसी धा ःश्रौतार्थ घनम्॥
तेनादृष्टमुपे पि त्यं श्रुतये मतम्॥ २८॥

ज्योतिष्टोमे श्रूयते। प्रउगं शंसति। निष्केवल्यं शंसति। ज्यैः स्तुवते। पृष्ठैः स्तुवत इति। प्रउगनिष्केवल्यशब्दौ शस्त्रविशेषनामनी॥

त्वादेरित्यादिशब्देनोत्तमपुरुषान्मन्त्रगणादयः। बर्हिर्देवसदनं दामी त्युत्तमः पुरुषः। अग्नीदग्नीन् विहरेत्यामन्त्रणम्। एवं ह्यरोऽपि यस्योभयं हविरार्त्ति । च्छेदित्युदाहरणीयम्। तस्मादाख्यातस्य प्रधानकर्मविधायकत्वं गुणकर्मविधायकत्वं चेत्येवं द्वावेव प्रकारौ न भवतः। किन्त्वभिधायकत्वमित्यप्यस्ति तृतीयः प्रकारः। ततो न मन्त्रगताख्यातस्य विधायकत्वम्॥ सप्तमाधिकरणमारचयति॥

अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम्॥
नास्त्यस्ति वास्य नास्त्येतदव्याप्त्यादेरवारणात्॥२१॥
याज्ञि नां समाख्यानं लक्षणं दोषवर्जितम्॥
तेऽनु न रकादौ मन्त्रशब्दं प्रयुञ्जते॥ २२॥

आधान इदमाम्नायते॥ अहे बुध्निय मन्त्रं मे गोपायेति॥ तत्र मन्त्रस्य लक्षणं नास्ति। अव्या तिव्याप्त्योर्वारयितुमशक्यत्वात्। विहितार्थाभिधायको मन्त्र इत्युक्ते वसन्ताय कपि लानालभत इत्यस्य मन्त्रस्य विधिरूपत्वाद स्तिः। मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिः। एवमपि पदान्तो मन्त्र उत्तमपुरुषान्तो मन्त्र इत्यादिलक्षणानां परस्परमव्याप्तिरिति चेत्। मैवम्। याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात्। तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति॥ उरु प्रथस्वेत्यादयोऽनुष्ठानस्मारकाः। अग्निमीळे पुरोहितमित्यादयः स्तुतिरूपाः॥ इषे त्वेत्यादयस्त्वान्ताः। अग्न आ याहि वीतय इत्यादय आमन्त्रणोपेताः। अग्नीदग्नीन् विहरेत्यादयः प्रैषरूपाः। अधः स्विदासीदुपरि स्विदासीदित्यादयो विचाररूपाः। अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चनेत्यादयः परिदेवनरूपाः। पृच्छामि त्वा परमन्तं पृथिव्या इत्यादयः प्रश्नरूपाः॥ वेदिमाहुः परमन्तं पृथि इ स्य उत्तररूपाः। एवमन्यदप्युदाहार्य्यम्। ईदृशेष्वत्यन्तविजातीयेषु समाख्यानम् मन्त्रेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्वमुच्येत। लक्षणस्योपयोगश्च पूर्वाचार्य्यैर्दर्शितः। ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथ शः। लक्षणेन तु सिद्धानामन्तं या

क्ति विपश्चित इति। तस्मादभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम्॥ अष्टमाधिकरणमारचयति॥ ॥

नास्त्येतद् ब्राह्मणे त्यत्र लक्षणं विद्यतेऽथवा॥
नीयन्तो वेदभागा इति क्लृप्तेरभावतः॥ २३॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः॥
अन्यद् ब्राह्मणमित्येतद् भवेद् ब्राह्मणलक्षणम्॥ २४॥

चातुर्मास्येष्विदमाम्नायते। एतद्ब्राह्मणान्येव पञ्च हवींषीति। तत्र ब्राह्मणस्य लक्षणं नास्ति। कुतः। वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागे च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात्॥ पूर्वोक्तो मन्त्रभाग एकः। भागान्तराणि च कानिचित् पूर्वैरुदाहृत्य संगृहीतानि। हेतुर्निर्वचनं निन्दा प्रशंसा संशयो। विधिः। परक्रिया पुराकल्पो व्यवधारणकल्पनेति। तेन ह्यन्नं क्रियत इति हेतुः। तद्दध्नो दधित्वमिति निर्वचनम्। अमेध्या वै माषा इति निन्दा। वायुर्वै क्षेपिष्ठेति प्रशंसा। तद्व्यचिकित्सज्जुहवानि मा हौषमिति संशयः। यजमानेन संमितौदुम्बरी भवतीति विधिः। माषानेवमह्यं पचतेति परकृतिः। पुरा ब्राह्मणा अभैषुरिति पुराकल्पः। यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेदिति विशेषावधारणकल्पना। एवमन्यदप्युदाहार्यम्। न च हेत्वादीनामन्यतमद् ब्राह्मणमिति लक्षणम्। मन्त्रेष्वपि हेत्वादिसद्भावात्। तथाहि। इन्दवो वा मुशन्ति हीति हेतुः। उदानिषुर्महीरिति तस्मादुदकमुच्यत इति निर्वचनम्॥ मोघमन्नं विन्दते अप्रचेता इति निन्दा। अग्निर्मूर्धा दिवः ककुदिति प्रशंसा। अधःस्विदासीदुपरिस्विदासीदिति संशयः। कपि नालभत इति विधिः। सहस्रमयुता ददिति परकृतिः। यज्ञेन यज्ञमयजन्त देवा इति पुराकल्पः। इ। करणबहुलं ब्राह्मणमिति चेत्। न। इत्यदा इत्ययं इत्यपच इति ब्राह्मणे गायेदित्यस्मिन् ब्राह्मणेन गानव्ये मन्त्रेऽपि हेः। इ हेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमिति चेत्। न। राजा चिदं भगं भक्षी ह। यो धारयाः शुचिरस्मी।

यनयोर्मन्त्रयो रतिव्याप्तेः। आख्यायिकारूपं ब्राह्मणमिति चेन्
।मयमीसंवादसूक्तादावतिव्याप्तेः। तस्मान्नास्ति ब्राह्मणलक्ष
ते प्राप्ते ब्रूमः। मन्त्र ह्मणरूपौ द्वावेव वेदभागावित्यङ्गीका
न्त्रलक्षणस्य पूर्वमभिहितत्वादवशिष्टो वेदभागो ह्मणा।
ाह्मणलक्षणं भवतीति॥ नवमाधिकरणमारचयति॥ ॥

ऊहप्रवरनाम्नां किं मन्त्रतास्त्यथवा नहि॥

मन्त्रोऽस्त्वदेकवाक्यत्वान्न तल्लक्षणवर्जनात्॥ २५॥

पे जुष्टं निर्वपामीत्यस्य सौर्य्ये चरौ सूर्य्याय जुष्टं निर्व मी
पदान्तरप्रक्षेप ऊहः। अदीक्षिष्टायं ब्राह्मण इत्यस्य मन्त्रस्य
ान प्रयोगकाले ब्राह्मणनामधेयविशेषनदीयं प्रवरं चैवं प
असौ देवदत्तोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्तामुष्याः पुत्रो
ाः पौत्रोऽमुष्या नप्तेति। आङ्गिरसबार्हस्पत्यभारद्वाजगोत्र इ
।एतेषामूहप्रवरनामधेयानां मन्त्रत्वमस्ति। कुतः। मन्त्रेण।
वाक्यत्वावगमादिति चेत्। मैवम्। त्रि कप्रसिद्धिरूपस्य म
क्षणस्योहादिष्वभावात्। न ध्येतार ऊहादीन्मन्त्र गं ऽ
ते। तस्मा स्ति मन्त्रत्वम्॥ दशमे दशद्वादशाधिकर
रचयति॥

नवसामयजुषां लक्ष्मसाङ्कर्य्यादिति शङ्किते॥

पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्यसंकरः॥ २६॥

म्नायते। अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः
त्रः सा नि यजूंषीति त्रीन् वेदान् विदन्तीति त्रिविदः। त्रि।
सम्बन्धिनोऽध्येतारस्त्रैविदाः। तैर्यं मन्त्रभागमृगादिरू।
त्रिविधमाहुस्तं गोपायेति योजना। तत्र त्रिविधानामृक्।
यजुषां व्यवस्थितं लक्षणं नास्ति। कुतः। साङ्कर्य्यस्य दृष्टत्वा
ात्। अध्यापकप्रसिद्धेर्ह्यृग्वेदादिषु पठितो मन्त्र इति हि ल
वक्तव्यम्। तच्च संकीर्णम्। देवो वः सविता उत्पुनात्वच्छिद्रे।
वित्रेण वसोः सूर्य्यस्य रश्मिभिरित्ययं मन्त्रो यजुर्वेदे संप्रति
यजुषां मध्ये पठितः। न च तस्य यजुष्ट्वमस्ति। तदृ ह्मणोऽसा

विभज्य चेत् मृक्तेन व्यवहृतत्वात्। सतत् साम गायन्तीत्ति इति प्रतिज्ञा य किञ्चित् साम यजुर्वेदे गीतम्। अक्षितमस्यच्युतमसि प्राणसंशितमसीति। त्रीणि यजूंषि सामवेदे समाम्नातानि। तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते। तस्मान्नास्ति लक्षणामिति चेत्। न। पादादीनामसंकीर्णलक्षणत्वात्। पादबन्धेनार्थबन्धेन चोपेता वृत्तबद्धा मन्त्रा ऋचः। गीतिरूपा मन्त्राः सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषीत्युक्ते न क्वापि संकरः॥ त्रयोदशाधिकरणमारचयति॥ ॥

प्रोक्षणीरासादयेति निगदस्त्रिविधाद्बहिः॥
यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता॥ २७॥
परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः॥
तल्लक्षणेन युक्तत्वात् त्रैविध्यमिति सुस्थितम्॥ २८॥

प्रोक्षणीरासादयेध्मं वर्हिरुपसादय। अग्नीदग्नीन् विहर। बर्हिः स्तृणीहि। इन्द्र आगच्छ। हरिव आगच्छेत्यादयो निगदा आम्नाताः। परसम्बोधनार्था मन्त्रा निगदाः। एते च पूर्वोक्तेभ्य ऋग्यजुःसामभ्यो वहिर्भूताश्चतुर्थप्रकाराः। कुतः। पादगीत्योर्ऋक्सामलक्षणयोरभावात्॥ प्रश्लिष्टपाठस्य यजुर्लक्षणस्य सत्त्वेऽपि धर्मभेदेन यजुष्यन्तर्भावानुपपत्तेः। उपांशु यजुषोच्चैर्निगदेनेति हि धर्मभेद इति। अत्र ब्रूमः। वहिर्ब्राह्मण भोज्यतांपरिव्राजकास्त्वन्तरित्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषो य। त निगदानां यजुर्लक्षणोपेतत्वेन यजुषामेव सतां परप्रत्यायननिमित्त उच्चैस्त्वधर्मः॥ ततो मन्त्राणां त्रैविध्यं सुस्थितम्॥

चतुर्दशाधिकरणमारचति॥

देवस्य त्वेति वाक्यस्य भिन्नत्वमथवैकता॥
ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता॥ २९॥
विभागे सति साकाङ्क्ष्यैकार्थत्वं प्रयोजकम्॥
तं दृष्ट्वैकमेतेन यजुरन्तोऽवधार्य्यते॥ ३०॥

दर्शपूर्णमासयोराम्नायन्ते। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां

पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति। तत्र वाक्यानि भिन्नानि।
भवितुमर्हन्ति। कुतः। एकत्व नियामकस्य दुर्बोधत्वात्। अर्थैकं।
कैकं प्रयोजकं स्यादिति चेत्। न। एकस्मिन् पदेऽति प्तेः। प
दसमूहस्य वाक्यत्वे समूहानामत्र बहूनां सम्भवात् वाक्यभेदः
स्यादिति चेत्। मैवम्। यद्विभागे साकाङ्क्षमविभागे चैकार्थं तदेकं
वाक्यमिति प्रयोजकस्य बोद्धुं शक्यत्वात्। द्विभागे साकाङ्क्षमित्युक्तेऽ
तिव्याप्तिः स्यात्। स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं क
ल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान
इति। अत्र तस्मिन्नित्यादिपदसमूहस्य विभागे सति प्रकृतवाचित
च्छब्दार्थनिर्णयाय पूर्वपदसमूहसाकाङ्क्षत्वमस्ति। अतस्तद्व्यव।
च्छेत्तुमेकार्थमित्युच्यते। न ह्यत्रै र्थ्यत्वमस्ति। पूर्वसमूहस्य।
सदनकरणमर्थः। उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनम्। स्योनं।
समीचीनम्। सुशेवं सुष्ठु सेवितुं योग्यम्। मेध सारभूत पुरो शेत्य
र्थः। अत्र द्वयोः पदसमूहयोर्वाक्यद्वयत्वमुभयवादिसिद्धम्। तदे
कार्थमित्यनेन व्यावर्त्यते। एकार्थमित्युक्तेऽतिव्याप्तिः स्यात्। भगो
वां विभजतु। पूषा वां विभजत्वित्यनयोर्विभिन्नमन्त्रत्वेन संमत
योः पदसमूहयोस्तात्पर्यविषयस्य द्रव्यविभागरूपस्यार्थस्यै
कत्वात् तद्व्यवच्छेत्तुं विभागे साकाङ्क्षमित्युक्तम्। प्रकृते त्वग्नये
जुष्टमित्यादिसमूहे पृथक्कृते पूर्वो देवस्य त्वेति समूहः साकाङ्क्षो
भवति। एकीकृते तु कृत्स्नस्यैक एव निर्वापोऽर्थः। एतेनैकवाक्य
त्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यम्॥

पञ्चदशाधिकरणमारचयति ॥ ॥

इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे॥
असत्यर्थास्मारकत्वादेः दृष्टस्य कल्पनात्॥१॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे॥
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः॥२॥

इषे त्वोर्जे त्वेति श्रूयते। सोऽयं पदसमुदाय एको मन्त्रः। कुतः। अ
दृष्टार्थत्वेनैकस्यै दृष्टस्य कल्पने लाघवात्। न चोरुप्रथ।

स्ते इत्यादिमन्त्रवदनुष्ठेयार्थस्मारकत्वं सम्भवति। क्रियापदाभावे-
न तदर्थप्रतीत्यभावादिति. प्राप्ते ब्रूमः। इषे त्वेति छिनत्ति। ऊर्जे त्वे-
त्यनुमार्ष्टीति पलाशशाखायाश्छेदनमार्जनयोरेतौ विनियुक्तौ॥
ततस्तदनुसारेण छिनद्मि। अनुमार्ज्मीत्येवं क्रियापदेऽध्याहृते
सत्यनुष्ठेयार्थस्मारकत्वादर्थभेदेन वा भेदाद् यजुर्मन्त्रभेदः। इष्य-
माणायान्नाय भोः पलाशशाखे। छिनद्मि। ऊर्जे रसाय च त्वा-
वा त्वामनुमार्ज्मीत्यर्थभेदः। एवमायुर्यज्ञेन कल्पताम्। प्राणो-
यज्ञेन कल्पतामित्यादौ क्लृप्तिसामान्यरूपस्यार्थस्यैकत्वेऽप्यायु-
रादिभिर्भिन्नत्वादर्थभेदवान् भेदयोः स्पष्ट न क्लृप्तीर्वाचय-
तीति क्लृप्तिबहुत्वस्य चोदित यजुर्भेदो द्रष्टव्यः॥ ॥

षोडशाधिकरणं रचयति॥

याते अग्ने रजेत्यध्याहारो यद्वानुषञ्जनम्॥
तनूर्वित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः॥ ३३॥
वेदाकाङ्क्षापूरणीया वेदेनत्यनुषञ्जनम्॥
अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः॥ ३४॥

ज्योतिष्टोम उपसद्धोमेष्वेवमा- यते॥ याते अग्नेऽयाशया तनूर्व-
र्षिष्ठा गह्वरेष्ठा। उग्रं वचो अपावधीत् त्वेषं वचो अपावधीत्॥
स्वाहा। याते अग्ने रजाशया। याते अग्ने हराशयेति। यमर्थः।
अयसा रजतेन हिरण्येन च निर्मिता अग्नेस्तिस्रस्तनवः। तास्व-
या येयमुक्ता तनूः सातिशयेन वृद्धा। गह्वरे नीरन्ध्रे द्रव्ये लोहे वा
स्थिता। तया तन्वा क्षुत्पिपासे उपपातकं वीरह दिमहापा-
तकं च हतवानसीति। तथा च ब्राह्मणम्। उग्रं वचो अपावधीं
त्वेषं वचो अपावधीत् स्वाहेति। अशनायापिपासे ह उग्रं-
वचः। एनश्च वैरहत्यं च त्वेषं वच इति। तत्र स्वाहान्तः प्रथमो मन्त्रः
संपूर्णवाक्यं निराकाङ्क्षः। द्वितीयतृतीययोराकाङ्क्षां पूरयितु-
चितो लौकिको वाक्यशेषोऽध्याहर्तव्यः। न हि तनूर्वर्षिष्ठे दिभा-
ग योरन्वेतुं योग्यः। तस्य प्रथममन्त्रशेषत्वादिति प्राप्ते ब्रूमः।
वैदिकयोर्मन्त्रयोराकाङ्क्षा वैदिकेनैव वाक्यशेषेण पूरणीया। तत

स्तनूर्वर्षिष्ठेत्यादिभाग उत्तरयोर्मन्त्रयोरनुषज्यते। यद्यप्यसावन्यमन्त्रस्य शेषस्तथापि बुद्धिस्थः संकल्पनीयादध्याहारात् संनिकृष्यते। तस्मादनुषङ्गः कर्त्तव्यः॥ सप्तदशाधिकरणमारचयति॥

नानुषङ्गोऽनुषङ्गो वाच्छिद्रेणेत्यस्य शेषिणि॥
चित्पतिस्त्वेत्यनाकाङ्क्षवत्तो नात्रानुषज्यते॥३५॥
करणत्वं क्रियापेक्षं क्रियाचैका पुनात्विति॥
मन्त्रत्रयेऽतस्तद्द्वारा सर्वशेषोऽनुषज्यते॥३६॥

ज्योतिष्टोमे दीक्षाप्रकरणे पठ्यते। चित्पतिस्त्वा पुनातु। वाक्पतिस्त्वा पुनातु। देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति। तत्र तृतीयमन्त्रे शेषोऽच्छिद्रेणेत्यादिभागः प्रथमद्वितीयमन्त्रयोर्नानुषज्यते। कुतः। निराकाङ्क्षत्वात्। नहि चित्पतिस्त्वा पुनातु। वाक्पतिस्त्वा पुनात्वित्येतयोः शेषिणोः सम्पूर्णवाक्ययोः काचिच्छेषाकाङ्क्षास्तीति पवित्रेण रश्मिभिरित्युक्तं करणत्वं हि क्रियामपेक्षते। क्रिया च पुनात्वित्येषा त्रिष्वपि मन्त्रेष्वेका। तया क्रियया संबद्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षोऽपि यथान्वेति। तथा पूर्वयोरप्यन्वेतुमर्हति। तस्मादस्त्यनुषङ्गः॥ ॥ ॥

अष्टादशाधिकरणमारचयति॥

गच्छतामिति शब्दस्यानुषङ्गोऽस्ति नवोपरि॥
सं यज्ञपतिरित्यत्र योग्यत्वात् सोऽस्तिपूर्ववत्॥३७॥
तदेकवचनं मध्यमन्त्रेऽङ्गानीत्यनेन हि॥
नान्वेति तद्धवाधेन नोपर्य्यप्यनुषज्यते॥३८॥

अग्नीषोमीयपशौ श्रूयते। सं ते प्राणो वातेन गच्छताम्। समङ्गानि यजत्रैः। सं यज्ञपतिराशिषेति। अयमर्थः। भोः पशो। तव प्राणो वातेन वाह्येन वायुना संगच्छताम्। तव हृदयाद्यङ्गानि यागविशेषैः संयुज्यन्ताम्। यज्ञपतिराशिषा संयुज्यतामिति। तत्र यज्ञपतिरित्यस्मिंस्तृतीयमन्त्रे समित्युपसर्गस्य क्रियापदाकाङ्क्षत्वात्। प्रथममन्त्रगतस्य गच्छ मिति प

इत्येकवचनान्तस्य यज्ञपतिशब्दे नान्वेतुं योग्यत्वं न पूर्ववद् बुद्धिस्थत्वेन संनिहितत्वं तदाकाङ्क्षासन्निधियोग्यत्वसद्भावेन क्रियापदमनुषज्यत इति प्राप्ते ब्रूमः। समस्तमन्त्रे बहुवचनान्तेनाङ्गानीत्यनेनान्वेतुमयोग्यत्वं तद्व्य येन बुद्धिसंनिध्यभावान्नास्यनुषङ्गः। ततो द्वितीयतृतीयमन्त्रयोर्यथोचितं वाक्यशेषोऽध्याहर्तव्यः॥ ॥ ॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे द्वितीयस्याध्यायस्य प्रथमः पादः॥

द्वितीयपादस्य प्रथमाधिकरणमारचयति ॥ १॥

ददातियजतीत्यादौ भावनैक्यमुतान्यथा ॥
आख्यातैकात्तदेकत्वं धातुभेदोऽप्रयोजकः॥ १॥
धातुभेदेन भिन्नत्वमाख्याते श्रूयते ततः ॥
उत्पत्त्येकानुरक्तत्वाद्भिद्यन्ते भावनामिथः॥२॥

इहैकप्रकरणे ... न्यपर्यायधातुनिष्पन्नान्याख्यातानि यजति ददाति जुहोति ... त्युदाहरणम्॥ तानि चैवं श्रूयन्ते। सोमेन यजेत। हिरण्य ... याय ददाति। दाक्षिणानि जुहोतीति। तेषु भावनावाचिन आख्यातस्यैकत्वाद्भावनाया एकत्वं युक्तम्। न च धातुभेदाद्भावनाभेदः। तद्वाचित्वाभावेन धातोस्तत्राप्रयोजकत्वादिति प्राप्ते ब्रूमः। अस्त्वाख्यातमेव भावनायाः प्रयोजकम्। तच्चाख्यातं प्रतिधातु भिन्नम्। न हि बहूनां धातूनामुपर्येक आख्यातप्रत्ययः श्रूयते। नापि व्याकरणे धातुसमूहादेकमाख्यातं विहितम्। तत आख्यातानां बहूनामेकैकधातुविशेषानुरक्तत्वेनोत्पन्नानां भावनावाचित्वेन यागदानहोमभावनाः परस्परं भिद्यन्ते॥ अत्र गुरुमतमाह॥ ॥

नियोगैकत्वतः शास्त्रमभिन्नमिति चेन्न तत्॥
धातुभेदाच्छास्त्रभेदे नियोगो भिद्यतेबलात्॥३॥

कर्मभेदचिन्ता नाध्यायार्थः। किन्तु शास्त्रभेदचिन्तेति गुरोर्म-
तम्। तत्र यजेत दद्याज्जुहुयादित्येतेषु लिङ्प्रत्यय व्यस्य॥
नियोगस्यैकत्वाद्धातूनां नियोगवाचकत्वाभावेनाप्रयोजकत्वादे-
कनियोगार्थं कृत्स्नं शास्त्रमेकमिति पूर्वपक्षः। प्रतिधातु लिङ्-
प्रत्ययस्य भिन्नत्वाद्धात्वर्थानुबन्धभेदेन तद्विशिष्टनियोगोऽभेदस्य
वारयितुमशक्यतया नियोगानुसारि शास्त्रं भिन्नमिति राद्धान्तः॥

द्वितीयाधिकरणमारचयति॥

समिधो यजती . दावेकत्वमुत भिन्नता॥
धातुप्रत्यययोरैक्यादेकत्वे भिन्नता कुतः॥४॥
अभ्यासात् कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे॥
विधित्वं श्रुतितो ति संनिधेरनु द॥५॥

र्शपूर्णमासयोः श्रूयते। समिधो यजति। तनूनपातं यजति। इ-
डो यजति। बर्हिर्यजति। स्वाहाकारं यजतीति। तत्र पञ्चकृत्वः श्रू-
यमाणे यजतिपदे पूर्वोक्तेषु यजति ददातीत्यादिपदेष्विव धातु
भेदो नास्ति येन भावनाभेद आशङ्क्येत। तस्मादाख्यातैकप्र
युक्तं भावनैकमति य्येमिति चेत्। मैवम्। यजतिपदाभ्यासेन
कर्मभेदावगमात्। कर्मैकत्वेऽभ्यासो निरर्थकः स्यात्। अर्थाच्ये
॥ समिधो यजतीत्यनेन प्रथमश्रुतेन वाक्येन विहितं समिच्छ
ाकं यागमुपरितनैश्चतुर्भिर्यजतिपदैरनूद्य तनूनपादादयो दे
तारूपा द्रव्यरूपा वा गुणाश्चत्वारो विकल्पिता विधीयन्त इति
ऽनुवादार्थत्वान्नाभ्यासवैयर्थ्यमिति। तन्न। तनूनपादादिश
ानां यागनामत्वेन गुणविधित्वाभावात्। न तावत्तत्र देवता
धिः चतुर्थीतद्धितयोरश्रवणात्। नापि द्रव्यविधिः तृतीया-
त्वाभावात्। ततोऽग्निहोत्रं जुहोतीत्यादाविव द्वितीयान्तानां
नामत्वम्॥ यत्तु चतुर्णामुपरितनानां यजतिपदानामनु
ादत्वं तदसत्। तेषां विधायकत्वात्। यथा समिधो यजतीत्य
यजतिपदे विधित्वं श्रुत्या प्रतीयते। तथान्येष्वपि चतुर्षु पदे
विधित्वं श्रौतम्। अनुवादत्वं तु पुरो दरूपस्य समिधो यज

तीत्यस्य सन्निधिनावगम्यते। सन्निधिश्च श्रुतेर्दुर्बलः॥ विधित्वेच पूर्व-
वाक्यविहितस्य समि   मकस्य यागस्य पुनर्विधानयोगात्तनूनपा
दादिनामकानि यागान्तराणि विधीयन्ते। नन्वेवं सति सं   भेदा
त् कर्मभेदः संपद्यते नत्वभ्यासात्। तथा सति वक्ष्यमाणेनाधिक
रणेन संकीर्य्येत। मैवम्। वैषम्यात्। अथैष ज्योतिरित्यस्मिन् व
क्ष्यमाणोदाहरणे यागावगमात् प्रागेव संज्ञात्वावगमात् संज्ञा
याः कर्मभेदहेतुत्वम्। इह तु विधायकैर्यजतिपदैर्यागेष्ववगते
षु भेदे चाभ्यासादवगते भिन्नानां यागानां समित् संज्ञायां   न्याः
संज्ञा अपेक्षिता इति तनूनपादादीनां संज्ञात्वं पश्चादवगम्यते।
तस्मादभ्यास एवात्र भेदहेतुः॥   तृतीयाधिकरणमारचयति ॥९॥

एवं विद्वान् पौर्णमासीममावास्यामितीतम्॥
कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम्॥ ६ ॥
कर्मान्तरं स्यादभ्यासान्नैवं द्रव्यं हि देवता॥
त्वार्त्रघ्नीत्यादितो लभ्यात्तु   दस्तुन युज्यते॥७॥
वार्त्रघ्नीत्याज्यभागाङ्ग-व्यवस्थोक्तेर्न देवता॥
पौर्णेत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा॥८॥
अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम्॥
सहस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके॥९॥
विहृत्य   विधौ विध्यावृत्तिराग्नेय   दिना॥
विहितस्य फलित्वेन प्राधान्यमितरे गुणाः॥१०॥

इदमाम्नायते। य एवं विद्वान् पौर्णमासीं यजते। य एवं विद्वानमा
वास्यां यजत इति। अत्र यजतिना कर्मान्तरं विधीयते। न तु प्रकृ
ता आग्नेयादयः षड् यागा अनूद्यन्ते। आग्नेयादयश्च कालसंय।
स्मिन् प्रकरण एवमाम्नायन्ते। यदाग्नेयोऽष्टाकपालोऽमा
स्यायां पौर्णमास्यां चाच्युतो भवति तावब्रूतामग्नीषोमावाज्य
स्यैव नावुपांशु पौर्णमास्यां यजन्निति। ताभ्यामेतमग्नीषोमीयमे
दशाकपालं पूर्णमासे प्रायच्छदिति। ऐन्द्रं दध्यमावास्यायां
म। ऐन्द्रं पयोऽमा   स्यायामिति। एतेभ्यः प्रकृतेभ्यः षड्भ्य आग्ने

यादिभ्यो विहद्वाक्यविहितस्य कर्मणोऽन्यत्वेसति पूर्वाधिकरण
न्यायेन विध्यभ्यास उपपद्यते।नचकर्मान्तरे द्रव्यदेवतयोरभावः।
ध्रौवाज्यसद्भावात्। अतएवो म। ध्रौवं साधारणं द्रव्यं देव मा
न्त्रवर्णिकी। रूपवन्तौ ततो या धीयेते पृथ येति।सर्वस्मैवा
एतद्यज्ञाय गृह्यते यद्ध्रुवाया माज्यमिति ध्रौवस्य साधारणत्वं
श्रुतम्।देवताया मान्त्रवर्णिकीत्वमित्यमुक्ते तव्यम्। तस्माद्वार्त्रघ्नी
पौर्ण स्यामनूच्येते वृधन्वती अमावास्यायामिति। त्रघ्नी वृ
धन्वत्यौ चर्चौ मेण त्वहूयोपेते कर्मणि विधीयेते। तत्राग्नि
र्वृत्राणि जङ्घनदित्येको वार्त्रघ्नो मन्त्रः। त्वं सो सि सत्पतिस्त्व
राजोत वृत्रहेत्यपरः। तयोरु वग्नीषोमौ पौर्ण सदेवते।एव।
मनन्तराम्नातयोर्वृधिधान्वु योर्मन्त्रयोरु वग्नीषो वमावा
स्यादेवते।आ द्रव्यदेव भ्यां रूपवाद्या न्तरमत्र विधीयते।ष
ड्यागानुवादत्वे तदनु देन विधेयान्तरस्य कस्यचिद् दर्शनाद्विह
द्वाक्यमनर्थकं स्यात्।नकेवलं तदानर्थक्यम्।किन्तु पौर्णमास्यांपौ
र्णमास्या यजेत। अमा स्या म वास्यया यजेतेत्येतदपि व्या
र्थं स्यात्। न चैतत् त्वविधायकम्।यदाग्नेय इत्याद्युत्पत्तिवा
क्यैरेव तद्विधानात्। कर्मान्तरत्वे तु त्वं विधास्यति। तस्मात्कर्मा
न्तरविधिरिति प्राप्ते ब्रूमः। आस्तां तावद् द्रव्यम्। देवता तु विधित्
सितस्य कर्मान्तरस्य सर्वथा न लभ्यते। त्रघ्नोर्वृधन्वत्योश्चा
ज्यभागदेव प्रतिपादकत्वात्। होत्रे मन्त्र रेडे सामिधेनीरा
वाहननिगदं प्रयाजमन्त्रांश्चाम्नाय प्र नन्तरं भाविनो ॥
ज्यभागयोः क्रमेण वार्त्रघ्नौ वृधन्वन्तौ चाम्नाते।लिङ्गं चाग्नि
विषयं सोमविषयञ्च तत्रोपलभ्यते। ततो लिङ्ग भ्यामाज्य
भागविषयत्वमवगम्यते।यत्तु त्रघ्नी पौर्ण स्यामित्यादि कं
तल्लिङ्गक्रमकॢप्तयोराज्यभा ङ्गयोर्मन्त्र गलयोः त्वहूये ।
वस्थामाचष्टे। ननु नूतनकर्माङ्ग तयोर्विदधाति।अतो रूपरा
हि द्विहद्वाक्यं कर्मान्तरा धाय तभव ।किं तर्हि पूर्वा
प्र तेष्वाग्नेयादिषु षट् ति रूपौ द्वौ समुदायावनुवदति।नच
त विभ्यां पौर्ण स्यमाना ज्याभ्यां गात ात्पत्ति

ततस्त त्वविहितयोर्यागत्रिकयोरुपलक्षिते तात्पर्ये चानुवाद्
त्वर्थः। समुदायद्वित्वसिद्धेस्तत्प्रयोजनत्वात्। तत्सिद्धौ च दर्शपूर्ण
मासाभ्यां स्वर्ग मो यजेतेत्यस्मिन् फलवाक्ये षड् याग व्यस्य
द्विवचननिर्देश उपपद्यते। यदप्युक्तमनुवादपक्षे पौर्णमासामित
दिवाक्यवैयर्थ्यमिति तदयुक्तम्। त धानासम्भवेऽप्येकैक
स्य त्रिकस्य सहप्रयोगविधानात्। आग्नेयोपांशुयाजाग्नीषोमीय
णां त्रयाणां पौर्णमासीकालविहितानां सहप्रयोगः पौर्णमास्ये
त्यनेन तृतीयैकवचनान्तेन विधीयते। एवममत्रापि नतु वि
द्वद्वाक्यस्य कर्मान्तरविधायक भावेऽपि नानुवादकत्वम्। तस्य
यागविधायकत्वाभ्युपगमात्। आग्नेयोऽष्टाकपाल इत्यादिवाक्य
नित्तु विहितयागानुवादेन द्रव्यदेवतालक्षणविधायकानीति
चेतात्। न सत्ये केन वाक्येनानेकगुणविध्यसम्भवात्। प्रतिगु
णं पृथग्विधौ विध्यावृत्तिः प्रसज्येत। आग्नेयादिवाक्यानां विधाय
कत्वे तु विशिष्टविधित्वा स्ति विध्यावृत्तिदोषः। तस्मादाग्नेया
वाक्यविहितानां विद्वद्वाक्यमनु ादकम्। किञ्चानुवादत्वमनभ्यु
गम्य कर्मान्तरविधिं वदतः प्रयाजादीनामाग्नेयादीनां च गुणप्र
तभावोन सिध्येत्। तथाहि समिधो यजति। आघार माघार
तीत्यादयः केचिद्विधय आम्नाताः। यदाग्ने॥
योऽ कपालोऽमावास्यायां च पौर्ण स्यां चेत्यादयः त्वप
अपरे। ते मुभये प्रकृत द् दर्शपूर्ण साभ्यां र्गकामो य
जेतेति कैन सर्वे फलसम्बन्धा धतीयः दर्शपूर्णमासा
भ्यामिति द्विवचनमत्र बहुवचनत्वेन परिणेतव्यम्। विद्वद्वाक्यवि
हिते द्वे कर्मान्तरे प्रयाजादय आग्ने दयश्चेत्येतेषु हि सम्भवात्
सर्वे च फलसम्बन्धे राजसूयगतेष्टिपशुसोमवत् समप्राधा।
त प दीनां गुणभावो तस्यात्। तदभावे तद्वत्वात् सौर्य
दिविकृतिष्वाग्नेयादीनामिवातिदेशो न स्यात्। अनुवादपक्षे तु त्रि
कयोः त्वयोगेन दर्शपूर्णमासशब्दार्हे त समुदायद्वित्वेन द्वि
वचनार्हे चाग्नेयादीनामेव फलसम्बन्धे तत्प्राधान्यम्। प्रयाजा

चतुर्थाधिकरणमारचयति ॥

उपांशुयाजमित्येषोऽनुवादोऽत्राथवा विधिः ॥
विष्णवादिवाक्यविस्पष्टविधेरस्यानुवादता॥ ११॥
जामितोक्तेरन्तराल उपांशुगुणके विधौ ॥
सत्यर्थवादो विष्ण्वादिस्तद्रूपा ध्रौवमन्त्रतः॥ १२॥

इदमाम्नायते। जामि वा एतद्यज्ञस्य। क्रियते। यदन्वञ्चौ पुरोडा- शावुपांशुयाजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय॥ प्रजापतिरुपांशु यष्टव्योऽजामित्वाय। अग्नीषोमावुपांशु यष्टव्या वजामित्वायेति। तत्र विष्णवादिवाक्येषु विहितस्य यागत्रयसमुदा यस्यानुवाद इति चेत्। मैवम्। आग्नेयाग्नीषोमीयपुरोडाशद्वया- नेरन्तर्य्यकृतस्य जामित्वदोषस्य वाक्योपक्रम उपन्यासात् पुरो- डाशयोरन्तराले किञ्चिद्विधित्सितम्। न ह्यन्तरालगुणविशिष्टं विधेयं विष्णवादिवाक्येषु प्रतीयते। पूर्ववाक्ये तु तत् प्रतीयत इति विधायकं तद्वाक्यम्। न चात्र यजतीति वर्त्तमानापदेशः शङ्कनी- यः। पञ्चमलकारस्याश्रयणात्॥ अन्तरालकालवदुपांशुत्वगुणो पि विशेषणत्वात्तद्विशिष्टकर्मण उपांशुयाजनामत्वम्। सत्येवं गुणद्वयविशिष्टकर्मणयाद्येन वाक्येन विहिते विष्णवादिवा क्यमर्थवादः स्यात्। न चात्र विहितयागानुवादेन देवताविधिः शङ्क- नीयः। समाधातव्ये न जामित्वदोषेणोपक्रमादजामित्वेन समाधा नेनोपसंहाराच्च। जामि वा इत्यादेरजामित्वायेत्यन्तस्य सर्वस्य महावा क्यस्यैकत्वप्रतीतेः। न खल्वेकस्मिन्वाक्ये विधेयबाहुल्यं सम्भवति। न चात्र विधित्सितस्योपांशुयाजस्य द्रव्याभावः। ध्रौवस्य तद्द्रव्य त्वात्। नापि देवताया अभावः। नानाशाखास्वुपांशुयाजक्रमे पठितै र्वैष्णवप्राजापत्याग्नीषोमीयमन्त्रैर्विकल्पेन देवतात्रयस्य प्रतीय मानत्वात्। तस्माद्यजतीत्येतद्विधायकम्॥ ॥

पञ्चमाधिकरणमारचयति ॥

अग्निहोत्राघारकमनुवादोऽथवा विधिः॥

अस्पन्नात्तु दध्यूर्ध्वं वा नो मनूद्यते ॥ १३ ॥
गुण्यसिद्धौ न दध्यादिर्गुणो तु विशिष्टता ॥
रूपं दध्यादिमन्त्राभ्यामतोऽसौ गुणिनो विधिः ॥ १४ ॥

इदमा यते। अग्निहोत्रं जुहोति। दध्ना जुहोति। पयसा जुहोतीति च। इदमपरमाम्नायते रमाघारयति। ऊर्ध्वं रय। ऋजुमाघारयति च। तत्राग्निहोत्र द॰ दि विहितस्य कर्मसमुदायस्यानुवादः। आघारवा चोर्ध्वादिवा विहितस्यानन्ते तद्वाक्यद्वयं कर्मविधायकम्। कुतः। द्रव्यदेवतालक्षणस्य यागरूपस्याभावादिति चेत्। तत्र व व्यम्। किं द॰ दिवाक्येन गुणमात्रं विधीयते किंवा गुणविशिष्टकर्म। ना ः। अग्निहोत्रादिवा स्य त्वन्मते कर्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धौ गुण्यनुवादपुरःसरस्य गुणमात्रविधानस्यासम्भवात्। द्वितीये विधिगौरवं स्यात्। त सन्या ग वयुक्तम्। अतोऽग्निहोत्रादिवाक्यं कर्मविधायकम्। तत्र द्रव्यं दध्यादिवाक्ये लभ्यते। देवता तु मान्त्रवर्णिकी। आघारेऽप्येवं द्रव्यदेवते ऊह्ये तद्वे ॥

ष धिकरणमारचयति ॥

यजत्यालभती स्तावनुवादौ विधी उत ॥
गृह्णात्यवद्यतीत्याभ्यां विहितेऽर्थेऽनुवादिनौ ॥ १५ ॥
नानुवादोऽपुरोवादे यज्यालभ्योरतो विधिः ॥
ग्रहणं सोमसंस्कारोऽवदाने प संस्क्रिया ॥ १६ ॥

सोमेन यजेतेति श्रूयते। तत्रैन्द्र यवं गृह्णाति। मैत्रावरुणं गृह्णातीत्यादीन्यपि श्रुतानि। एवमग्नीषोमीयं पशुमालभेतेति श्रूयते। तत्र हृदयस्याग्रेऽवद्यति। अथ जिह्वाया अथ वक्षस इत्यादीन्यपि श्रुतानि। तत्रैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते। इन्द्रवाय्वादिप्रातिपदिकैर्देवतानां तद्धितेन सोमरसद्रव्यस्य च प्रतीयमानत्वात्। एतेषां ग्रहणवाक्यविहितानां यागानां समुदायः सोमेन यजेतेत्यनेनानूद्यते। तथावदानवाक्येषु हृद दिद्रव्यं श्रुतम्। अतो द्रव्यविशिष्टा यागास्तत्र विधीयन्ते। तदनुवादेन।

पश्वालम्भवाक्येऽग्नीषोमरूपा देवता विधीयते।तस्मादवदान वाक्यविहितानां यागानां समुदायः पशुमालभेतेत्यनेनानूद्य त इति प्राप्ते ब्रूमः।सति हि पुरोवादेऽनुवादो भवति।न त्र पु रो दोऽस्ति।सोमेनयजेतेत्यनेन प्रतीयमानस्यार्थस्य ग्रहणा क्येप्र प्रतीतेः।नहि ग्रहणं यजनं भवति।नापि तद्धितप्रत्ययोक्तो रसः। सोमलता।नच तद्धितप्रत्ययः सर्वनामार्थे विहितः प्र तं ब्रूतेन तु रसमिति शङ्कनीयम्।धारया गृह्णातीति रसस्यैव प्र तत्वा त्।तथा पशुमालभेतेत्यनेन प्रतीतोऽर्थो नावदानवाक्येषु प्रती यते।ततः पुरोवादाभावेऽनुवादासम्भवात् यजत्यालभतिभ्यां कर्मणी विधीयेते।ग्रहणवाक्ये तु देवताविशिष्टः सोमसंस्कारो विधीयते।अवदानवाक्ये च पशुसंस्कारः॥ ॥

सप्तमाधिकरणमारचयति॥

आहुतीस्तिस्र इत्यत्र कर्मैकामुत भिन्नता॥
एकत्वं सकृदाख्यानात् संख्या वृत्त्या प्रयाजवत्॥१७॥
आख्यानमात्रं नोमानं संख्यापा बहुकर्मता॥
आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः॥१८॥
पशून् सप्तदश प्राजापत्यानित्यत्र भाष्यकृत्॥
विचारमाह पूर्वत्र क्रियात्रित्वस्फुटत्वतः॥१९॥
बहुत्वोपेतपशुभिर्द्रव्ययोगाद्भिन्नता॥
रूपस्य तेन कर्मैक्यं संख्या नात्र क्रियागता॥२०॥
देवतासङ्गतस्यैव तद्धितार्थस्य पश्चिमः॥
बहुत्वसङ्गमो रूपसंख्यया तत्क्रियाभिदा॥२१॥

तिस्र आहुतीर्जुहोतीति श्रूयते।तत्र जुहोतीत्येतदाख्यातं स धो यजतीत्यादिवन्नाभ्यस्तम्।किन्तु सकृदेवाम्नातम्।तत एव मिदं कर्म।त्रित्वसंख्या तु तस्यैवकर्मणा वृत्त्या नेतव्या।यथा प्रयाजेष्वेकादशत्वसंख्या पञ्चानामेव प्रयाजानामा तं ता।तद्वदिति प्राप्ते ब्रूमः।किमिदमाख्यातं पदान्तरनिरपेक्षं व कर्मैक्ये प्रमाणमुत पदान्तरान्वितम्।नाद्यः।वाक्यशेषस्य

मात्रस्य प्रमितिजनकत्वाभावात्। द्वितीये त्रि संख्य विशेषिते नाख्यातेन कर्मबहुत्वं गम्यते। प्रयाजानां तु पूर्वमेव पञ्चसंख्यावरुद्धः दावृत्तिमन्तरेणैकादशत्वं दुःसम्पादम्। दृहत्वेन द्विधितः पूर्वं कर्मणा एकत्वं संख्याविरोधो नास्तीति वैषम्यम्॥

तदेतद् वृत्ति दोदाहरणं भाष्यकारो नानुमन्यते। कर्म चिन आहुतिशब्दस्य विशेषणेन त्रिशब्देन कर्मबहु स्फुटतया पूर्वपक्षानुत्थानात्। इदं त्वत्रोदाहरणम्। सप्तदश मा पत्यान् पशूनालभेत इति। अत्र प्रजापतिर्देव येषां पशूः तेमा पत्या इति तद्धित तपत्तौ बहुत्वोपे :पशवएकं द्रव्यमापन्नो। द्रव्यैकत्वाद् देवतै च यागस्य रूपमभिन्नमित्ये मिदं कर्म। ।या तु सप्तदशेति संख्या सा पशुद्रव्यगता। न तु पूर्वोदाहृतत्रि।त्वसंख्येव क्रियागता। तस्मान्न कर्मभेदमापादयतीति प्राप्ते ब्रूमः ।अत्र प्र पति देवता यस्य पशोः स प्राजापत्यः। तद्धितान्ते प्रातिपदिकं व्युत्पाद्य पश्चात् तद्धितान्तप्रातिपदि र्थस्य प्रजापतिदेव विशिष्ट पशोः कर्मबहुत्वविवक्षायामुत्पन्ने इमे। द्वितीया विभक्ति बहुवचने। तत्र प्रथमभाविन्या द्वितीयाविभक्तेरेव तावत् तद्धितोत्पत्तिवेलायामन्वयो नास्ति। कुतः। पश्चाद् भाविनो बहुवचनस्यान्वयः। एवं सति प्राजापत्यैत्यनेन तद्धितान्तप्रातिपदिकेनैकं पशुद्रव्यमेकदेवतोपेतं यागस्य रूपं समर्थ्यते। तादृशानां रूपाणां बहुत्वाय बहुवचनम्। बहुत्वविशेषः सप्तदशेति निर्दिश्यते। तस्मादत्र संख्यया कर्मभेदः। एवं सत्यष्टमे वक्ष्यमाणं सप्तदशपशूनामेकादशिनपशुगणविकृतित्वमुपपद्यते॥ ॥ अष्टमाधिकरणमारचय ॥ ॥

अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक् ॥
गुणः सहस्रदानाख्यो ज्योतिष्टोमे ह्यनूदिते॥२२।
अथेति प्र ने छिन एतच्छब्दोऽग्रगं वदेत्॥
संख्येये न्यकर्मत्वमिह नूतनसंज्ञया॥२३॥

अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रद

ग्रोन यजेतेति श्रूयते। अत्र प्रकृतं ज्योतिष्टोममेव ज्योतिरि
त्यनूद्य तस्मिन् सहस्रदानलक्षणो गुणो विधीयत इति चेत्। न
कृतस्य ज्योतिष्टोमस्याथेत्यनेन छिन्नत्वात्। न चैवं मन्यथैव।
।तिरित्यु एतच्छब्दाऽनुपपन्न इति च्यम्। सन्निहितवाचि
।च्छब्देनातीतसन्निहितस्य यागामिसन्निहितस्यापि परामर्श।
भ तो। आगामिसन्निहितस्य ज्योतिःशब्दार्थः। स च ज्योतिः।
द्वाऽतीतमपरामृष्टत्वं पूर्वसंज्ञारूप न नूतनं किञ्चित् कर्मा
धते। ततो य पूर्वत्र संख्य कर्मभेदः। त पि संज्ञया
भिद्यते। विश्वज्योतिः सर्वज्योतिः शब्दयोरप्ययं न्यायो द्रष्ट
॥ ॥ नव धि रणामारचयति ॥ ॥

गुणः कर्मान्तरं वास्याद्वाजिभ्यो वाजिनं त्विति॥
गुणो देवाननूद्योक्तः समुच्चयविकल्पतः॥२५॥
आमिक्षोत्पत्तिशिष्टत्वात् प्रवृत्ता तत्र वाजिनम्॥
गुणोऽप्रविश्य कर्मान्यत् कल्पयेद्वाजिदेवकम्॥२५॥

।पयसि दध्यानयति। वैश्वदेव्यामिक्षा वाजिनमिति श्रू
। घनीभूतः पयःपिण्ड आमिक्षा। जलं वाजिनम्। त सि
द्रव्यभाजो विश्वेदेवा मु :ते वाजिभ्य इत्यनेनानूद्यन्ते
जोऽन्नमामिक्षारूपमेषामस्तीति तन्निष्पत्तेः। नाननूद्य
जेन द्रव्यरूपो गुणो विधीयते। तच्च द्रव्यमामिक्षाद्रव्ये
सह समुच्चीयतां विकल्प्यतां वेति प्राप्ते ब्रूमः। उत्पत्तिशि
ामिक्षाद्रव्येणावरुद्धे वैश्वदेवयागे वाजिनद्रव्यस्योत्पत्ते।
श्य प्रवेशाभावाद् वाजिनं वाजिशब्दार्थस्य देवतान्तरता
ारयति। ततो द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात् कर्मा
म्॥ दशमाधिकरणमारचयति ॥ ॥

दधिहोमेऽन्यकर्मत्वं गुणो वान्यत्तु पूर्ववत्॥
निर्गुणे दधिहोमे स्युक्तो दध्यादिको गुणः॥२६॥

। जुहोतीति श्रूयते। तत्राग्निहोत्रं जुहोतीत्यनेनस्मात् प्रकृतात्।

कर्मणोऽन्यद्दधिहोमरूपं कर्मेति पूर्वन्यायेनावगम्यते। यथा पूर्वत्र वाजिनद्रव्येण कर्म भिद्यते। न दधिद्रव्येणेति चेत्। न। वैषम्यात्। य वैश्वदेवो ग आमिक्षागुणावरुद्धः। तथाग्निहोत्रे न गुणान्तरावरुद्धम्। प्रत्युत निर्गुणत्वाद् गुणमाकाङ्क्षति। न दयं गुणविधि। एवं पयसा जुहोतीति द्रष्टव्यम्। पयोदध्यादीनां सर्वेषामुत्पत्त्यशिष्टतया समबल देकैकेन द्रव्येणाग्निहोत्रनिष्पत्तेर्व्रीहियववद्विकल्पः॥ ॥ दशाधिकरणमारचयन्ति ॥ ॥

यद्ध्नेन्द्रियकामस्य जुहुयादिति तत् पृथक्॥
गुणो भिद्यते कर्म धात्वर्थे फलितं ततः॥२७॥
मत्वर्थगौरवा द्धो न्यत् कर्म फलाय तु॥
गुणो विधेयो धात्वर्थो विहित दनूद्यते॥२८॥

दध्नेन्द्रिय म जुहुयादिति श्रूयते। नदिदं प्र ता दग्निहोत्रादन्यत् कर्म। नत्वत्र गुणविधिः। कुतः। इन्द्रिय म त्युक्तस्य फलस्य धात्वर्थमन्तरेण द्रव्य त्राद ष्पत्तेरिति चेत्। मैवम्। कर्मान्तरविधौ दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षणाप्रसङ्गात्। गुणविशिष्टक्रियाविधौ गौरवात्। प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गाच्च गुणमात्रं तु फलाय विधीयते। यद्यपि दध्ना जुहोतीति दधि प्राप्तं त पि फलसम्बन्धो न प्राप्तः। धात्वर्थाभावे फ सम्भव त्र चेत्। न। अग्निहोत्रं जुहोतीति विहितस्य धात्वर्थस्यानूद्यमान त॥ ॥ द्वादशाधिकर रचयन्ति ॥ ॥

उ ग्निष्टुतमेतस्य रवन्तीयसामहि ॥
रेवतीष्वृक्षु त्वेति श्रुतं पशुफलाप्तये॥२९॥
रे दिर्गुणः कर्म पृ ग्वा पूर्ववद्गुणः॥
रेवतीवारवन्तीयसम्बन्धाख्यः पशुप्रदः॥३०॥
साम्नोऽत्र फलकर्मभ्यां सम्बन्धे कामि ता॥
तेनोक्तगुणसंयु मन्यत् कर्मोच्यते फले॥३१॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य यव्यास्तृष्वे कविंशमग्निष्टोमसाम कृ ब्रह्मवर्चसकामो यजेतेत्यस्य सन्निधौ श्रूयते॥एतस्यैव रेव

तीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति।
अस्यायमर्थः। अग्निष्टोमस्य विकृतिरूपः कश्चिदे  होऽग्निष्टुन्
नामकः। स च पृष्ठस्तोत्रे त्रिवृत्स्तोमयुक्ततया त्रिवृदित्युच्यते॥
अग्निष्टोमोक्थ्यादीनां सप्तानां सोमसंस्थानां मध्येऽग्निष्टोमसंस्था
रूपत्वादग्निष्टोम इत्युच्यते। प्रकृतौ तृतीयसवन आर्भवपवमान।
स्योपरि यज्ञायज्ञीय साम गीयते। तेन च साम्नाग्निष्टोमयागस्य स
माप्यमानत्वादग्निष्टोमसामेत्युच्यते। तच्च प्रकृतौ यज्ञायज्ञा वो।
अग्नय इत्याद्यास्वाग्नेयीष्वृक्षु गीयते। अस्मिंस्त्वग्निष्टुति ब्रह्मवर्चस
कामेन वायव्यास्वृक्षु तत् साम गातव्यम्। तच्च प्रकृताविवेकवि
शस्तोमयुक्तम्। पशु   म   तु रेवतीर्नः सधमाद इत्यादिषु रेव
तीष्वृक्षु वारवन्तीयं साम गायेदिति। तत्र रेवतीनामृचां वारव
न्तीयनामकेन साम्ना यः सम्बन्धः सोऽयं पशुफलायाग्निष्टुति॥
विधीयते। एतस्यैवेति प्र   तपरामर्शकेनैतच्छब्देनान्यव्याव
र्तकेनैवकारेण चाग्निष्टुतः समर्प्यमाणत्वात्। यथा पूर्वाधि
करण इन्द्रियफलाय प्रकृतेऽग्निहोत्रे दधिगुणो विहितः। तद्व
दिति प्राप्ते ब्रूमः। विषमो दृ   न्तः। दध्नो होमजनकत्वं तु शास्त्रे
ण बोधनीयम्। तस्य लोकतोऽवगन्तुं श   त। फलसम्बन्ध।
एक एव शास्त्रबोध्य इति न तत्र वाक्यभेदः। इह तु रेवत्यृगा
धारकवारवन्तीयसाम्नोऽग्निष्टुत्कर्मसाधनत्वं फलसाधन।
त्वं चेत्युभयस्य शास्त्रैकबोध्यत्वाद् दुर्वारो वाक्यभेदः। तेनाप
शुफलकं यथोक्तगुणविशिष्टं कर्मान्तरमत्र विधीयते। एत।
च्छब्द एवकारश्च विधीयमानकर्मान्तरविषयतया योजनीयौ
॥ त्रयोदशाधिकरणमारचयति ॥ ॥

वृष्ट्यन्नस्वर्ग   तां सौभरं स्तोत्रमीरितम्॥
निधनान्यपि हीषूर्गू इति वृ   दि   मि   स॥३२॥
फलान्तरं किं वृ   दि हो   दीनामुतोदिते॥
सौभरे फलसंभिन्ने निधनं विनियम्यते॥३३॥
फलान्तरं चतथ्योक्तं वृष्टि   माय हीषिति॥

सौभरस्य फलं वृष्टिं हीषित्तु विवर्धने॥ ३४॥
नोक्तवृ न्न मानामन्यत्वं प्र भिवू ॥
नियमेऽपि चतुर्थ्यं ताद्‌र्थ्यादुपपद्यते॥ ३५॥

यो वृष्टि मो योऽ द्य मो यः गे सः स सौभरेणस्तुवीन ।सर्ववै ः सौभर द्य स य पुनः स नम। हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्य द्य य ऊ इति स्वर्ग । मायेति। सौभरं म साम विशेषः। निधनं नाम पञ्चभिः सप्त भिर्वा भागैरूपेतस्य साम्नोऽन्तिमो गः। तस्मिन्निधने ही द्यो विशे ः सौभरसामसाध्यस्तोत्र तेभ्यो वृ दिभ्योऽन्यानि दिफलानि जनयितुं विधीयन्ते। कुतः। ही दिविधि के वृष्टि कामायेत्यादिना चतुर्थीश्रवणात्। दर्थ्यं ब्रुवती हीषादीनां वृ ष्ट्यादि मपुरुषशेषत्वं गमयति। तच्छेषत्वं च पुरु भिलषि तफलसाधनत्वे सत्युपपद्यते। ततः सौभरस्य हीषि निधनवि शेषस्य च फलभूते द्वे वृष्टी भवतः। तदुभयमेलनान्महती। वृष्टिरिति प्राप्ते ब्रूमः। सौभरविधौ यो वृ दिः मः स एव ही षादिविधौ प्रत्यभिज्ञायते। ततः सौभरस्य फलभूता ये वृ । द्यस्त एव ही दिवाक्येष्वनूद्यन्त इति न फ न्तरम्। अथो च्येत। नूतनफलान्तराभावाद्धी दी च नानाशास्वाध्यय। नादेव सौभरे म दनर्थकोऽयं विधिरिति। तन्न। फलत्रा। यकामानां त्र णामनियमेनैव हीषादिषु मध्ये यस्य कस्य चिन्निधनस्य प्राप्तौ विधेर्नियमार्थत्वात्। ताद्‌र्थ्यं तु फलान्त राभावेऽपि सौभरवाक्योक्तवृ दिफलसाधने सौभरे हीषादी नां नियम्यमानत्वादुपपद्यते। तस्मादयं निधनविशेषनियमः ।नविधिः॥ ॥ इति माधवीये जैमिनीयन्यायमालाविस्तरे॥ ॥

॥ द्वितीय ः यस्य द्वितीयः पादः॥

तृतीयपादस्य प्रथमाधिकरणमारचयति॥

रथन्तरं साम सोमे भवेत्तद्वद्‌ बृहत्त्वगात्॥
ऐन्द्र यवशुक्राग्रयणाश्च ग्रहाः श्रुताः॥ १॥

रथन्तरादिसंयुक्तमन्यत् कर्मायवा गुणाः॥
दित्वनात् पूर्वादन्यद्व्यावृत्तिर्नो गुणे॥ ३॥
सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके॥
ग्रहाग्र गुणास्तत्र वृत्तिस्तु परस्परम्॥ ४॥

ज्योति रणे श्रूयते। यदि र न्तरसामा सोमः स्यादैन्द्र। य न ग्रहान् गृह्णीयात्। यदि वृहत् सामा शु ग्रान्। यदि जगत्सा ग्रयणाग्रानिति। तत्र म शब्देन सोमल साधन को यो धीयते। तस्मिंश्च यागे ध्यन्दिने सवने पृ स्तोत्रे रथन्तरवृहज्जगत् नाम नि सामानि विकल्पेन विहितानि॥ अभि शुरेत्येतस्यां नावुत्पन्नं रथन्तरम्। मेद्धि हृ। मह इत्येत मुत्पन्नं वृहत्। जगतीच्छन्दस्कायामृच्युत्पन्नं। जगत्। ऐन्द्रः यवो मे वरुणा श्विनः शुक्रो मन्थ्या ग्रयणा उक्थ्या ध्रुव इ दि मका ग्रहाः प्रातः सवने गृह्यन्ते। दारु त्रेषु सोमरसस्य ग्रहणाद् ग्रहा भवन्ति॥ सोम गस्य रथन्त रः सोपेन पक्ष एतेषु ग्रहेष्वैन्द्रः वः प्रथमं ग्रहीतव्यः। वृह तसामोपेतत्वपक्षे शु ः। जगत् सामोपेतत्वपक्ष आग्रयणः प्रा थमिक इति विधयवाकस्यार्थः। तत्र प्र तो ज्योतिष्टोमो गा य दिसामोपेतः। तद्व्या वृत्त्यर्थमिह रथन्तरादयो गु :की र्त्यन्ते। तस्मादैन्द्र वाय वाग्रत्वादि गुणोपेतानि कर्मान्तराण्यत्र। विधीयन्त इति प्राप्ते ब्रूमः। यदि रथन्तरसा सोमः स्यादि त्युक्तोयः सोमशब्दस्तेन प्रकरणेन चात्र ज्योतिष्टोमः समर्प्यते॥ समर्पिते तस्मिन् यथोक्तग्रहाग्रत्वं गुणो विधीयते। न च रथन्त। रादिगुणानुवादेन ज्योतिष्टोमस्य वृत्तिः सम्भवति। तस्य प्रातः सव हे गायत्रादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथन्तरादियोग स्यापि सद्भा न। किं तर्हि वर्त्यत इति चेत्। रथन्तरवृहज्ज गतां परस्परं व्यावृत्तिरि च मः। रथन्तरादयः पृष्ठस्तोत्रे वि ल्पि ः। तत्र रथन्तरानुवादेनेतरौ पक्षौ वर्त्येते। एवमित रः पित द गुणविधिः। ननु यः प्र तो ज्योतिष्टोमः सोऽन्यो।

षां सोमयागानां प्रकृतिः। न हि प्रकृतौ जगत्यामुत्पन्नं साम वि-
हितमस्ति। अत एव दशमाध्याये पञ्चमपादस्य पञ्चदशाधिक
रणे प्रथमवर्णके यदि जगत्सामेति वाक्योक्तमाग्रयणाग्रत्वं।
विकृतौ विषुवन्नामके मुख्येऽहनि व्यवस्थापितम्। बाढम्। तथा
पि नात्र कश्चिद्विरोधः। आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधाय
कम्। किन्त्वन्ये नविहिते सोमयागे यत्र जगत्साम सम्भवति त
त्र गुणविधायकमित्येतावन्मात्रस्यात्र प्रतिपाद्यत्वात्॥ ॥

॥ द्वितीयाधिकरणमारचयति ॥

राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुतात्र तु॥
विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे॥४॥
विप्रादेरनुवादः स्यात् प्रापणं वानुवादगीः॥
व्यत्ययाय त्रयाणाञ्च राजत्वान्न प्राप्तिरस्ति हि॥५॥
न राज्ययोगाद्राजत्वं क्षत्रियत्वं तु तत्त्वतः॥
अप्राप्तप्रापणं तस्माद्रथन्तरतुल्यता॥ ६॥

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामका श्रूयते। आग्नेयम-
ष्टाकपालं निर्वपति हिरण्यं दक्षिणा। ऐन्द्रमेकादशकपाल
मृषभो दक्षिणा। वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा। मैत्रा
वरुणीमामिक्षां वशा दक्षिणा। बार्हस्पत्यं चरुं शितिपृष्ठो दक्षि
णेति। तस्यामेवेष्टौ हविषां क्रमव्यत्ययः श्रूयते। यदि ब्राह्मणो
यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वा तमभिघारयेत्। यदि
राजन्यं ऐन्द्रम्। यदि वैश्यो वैश्वदेवमिति। तत्र यथा पूर्वाधिक
रणे ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदिशब्दयुक्तेन वाक्येन
रथन्तरं निमित्तत्वेनानूदितम्। एवमत्रापि पञ्चमस्थाने श्रूय
माणं बार्हस्पत्यं चरुं मध्ये तृतीये स्थाने स्थापयितुं यदि ह्म
णा इत्येतन्निमित्तत्वेनानूद्यते। द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृती
यस्थानेऽवस्थापयितुं यदि राजन्य इत्यनुवादः। वैश्वदेवस्य तु स्व
त एव तृतीयस्थाने श्रवणात्तत्र मध्ये निधानविधिर्नित्यानुवादः
। ननु राजकर्तृके राजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावात्तानव

दीयुक्त इति चेत्। न। तयोरपि राज्ययोगहेतुकृतराजशब्दार्थत्वा
दिति प्राप्ते ब्रूमः॥ राजशब्दः क्षत्रियजातौ रूढः। न तु राज्ययोग
स्तस्य प्रवृत्तिनिमित्तम्। प्रत्युत राज्यशब्दस्य राजयोगः प्रवृत्ति
निमित्तम्। राज्ञः कर्मेति विगृह्य राजप्रातिपदिकस्योपरि प्रत्यय
विशेषविधानाद ब्राह्मणवैश्ययोः प्रजापालनेन राजशब्द उप
चारितः। तस्मादवेष्टौ णवैश्यौ पूर्वमप्रा वनेन वचनेन प्रा
प्यते। ननु राजसूयस्य राजकर्तृकत्वात् तदन्तर्गता अवेष्टेरपि
तथात्वात्तस्यां ह्मणवैश्ययोः प्रापणमयुक्तमिति चेत्। मैवम्।
अन्तरवेष्टौ तदसम्भवेऽपि राजसूयाद्बहिः प्रयुज्यमानायाम
वेष्टौ तत्सम्भवात्। तस्मादत्र ब्राह्मणादिकर्तृक यथोक्तगुण
विशिष्टं कर्मान्तरं विधीयत इति न रथन्तरादितुल्यत्वम्। यदि
शब्दस्तु निपातत्वादनर्थकोऽर्थान्तरवाची वेत्यु नेयम्॥

॥ तृतीयाधिकरणमारचयति॥

वसन्ते प्रिय आदध्यात्तत्रैवोपनयीत तम्॥
अनुवादः प्रापणं वानुवादः कालसिद्धये॥ ७॥
अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसम्भ तः॥
कृप्ते आधानोपनीती प्राप्ता वि द्ययस्ततः॥ ८॥
लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति ल्पनम्॥
कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते॥ ९॥

वसन्ते ब्राह्मणोऽग्नीनादधीत। ग्रीष्मे राजन्यः। शरदि वैश्य इ
ति श्रूयते। वसन्ते णमुपनयीत। ग्रीष्मे राजन्यम्। शरदि
वैश्यमिति च। तत्र वसन्तादिकालविशेषं विधातुं ह्मणादयो
ऽनूद्यन्ते। न च तेषां प्रा भावः। क्रत्वनु नान्यनुपप क्
प्तत्वात्। तथा हि आधारभूतमग्निमनुष्ठानप्रकारज्ञापि वि
द्यां च विना कर्मानु नं सम्भवति। अग्निश्च नाधानमन्तरेण
सीति। ब्राह्मणादि कर्तृकमाधानं कल्पयति। वि चोपनय
नपूर्व ध्ययनमन्तरेणासम्भवन्ती ह्मणाद्युपनयनं कल्प
यतीति तत्र प्राप्तिरिति चेत्। मैवम्। लौकि ग्नौ होतुं पुस्तकपा

ठेनाधिगन्तुं च शक्यत्वेनाधानोपनयनयोरकल्पनेऽप्रा ... णादीना
मप्राप्तेः। तस्माद्वसन्तादिकालविशिष्टे ... ह्मणादिकर्तृके ... धानो
पनयने अत्र विधीयेते॥ ॥ चतुर्थाधिकरणमारचयति॥

यद्दाक्षायणयज्ञेन स्वर्ग ... मो यजेत तत्॥
कर्मान्तरं गुणो वाऽऽद्यः दर्शादौ फलसिद्धये॥१०॥
गुणस्यास्याप्रसिद्धत्वा त ... र्मभेदोऽत्र संज्ञया॥
गुणो व्युत्पत्तिशेषाभ्यामावृत्त्याख्येन ... मतत्॥११॥

दर्शपूर्णमासप्रकरणे श्रूयते। दाक्षायणयज्ञेन स्वर्गकामो यजेते
ति। तत्र दा ... यणशब्दवाच्यस्य कस्यचिद् गुणस्य लोके प्रसिद्ध्य
भावादुद्भिदादिवद् यजिसामानाधिकरण्येन कर्मनाम ... द्यैष
ज्योतिरित्यादिवदपूर्वसंज्ञा ... कर्मान्तरविधिरिति चेत्। न। दा
... यणशब्दस्यावृत्तिवाचक ... त्। न ... शब्दनिर्वचनाद् ... क्य
शेषाच्चावगम्यते। तथा हि। अयनमि ... वृत्तिरुच्यते। दक्षस्येमे दा
क्षाः। तेषामयनमिति तन्निर्वचनम्। दक्ष उत्साही पुनः पुनरावृ
त्तावनलस इत्यर्थः। तदीयानां प्रयोगाणामावृत्तिर्दाक्षायणश
ब्दार्थः। तयाऽऽवृत्त्या युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दा
क्षायणयज्ञः। आवृत्तिप्रकारस्तु ह पौर्णमास्या यजेत ह अ
... इ ... दि ... क्यशेषादवगम्यते। ततो दध्यादिवत् प्रसिद्धार्थ ... द्
दर्शपूर्णमासयोः प्रकृतयोरयं स्वर्गफलसिद्ध्यर्थ ... वृत्त्याख्यगुण
विधिः। न तूद्भिदादिवत् कर्मनामधेयम्। एवं साकंप्रस्थायीयेन
यजेत पशु ... म इत्यत्रापि द्रष्टव्यम्। अमावास्यायागे द्वौ द्वौ दो
हौ सम्पाद्य चतसृणां दधिपयसोः कुम्भीनां सहप्रस्थापनं साकंप्र
स्थीयः। तद्युक्तो दर्शयागः साकंप्रस्थायीयः। तथा सति प्रकृ
ते दर्शयागे पशुफ ... य साकंप्रस्थायाख्यो गुणो विधीयते॥ ॥

॥प ... धिकरणमारचयति॥

... श्वेन आलभ्यो भूत्यै सौर्यं चरुं तथा॥
निर्वपेद् ... ह्मतेजोऽर्यमीषामुष्टिनिरूप्यतां॥१२॥
गुणो श्वेतं चरुं किंवा यावत्कथितकर्मणि॥

फलार्थे अथवा यागौ विशिष्टौ विहितौ विह ॥२३॥
श्वेतत्वं वायुसूर्याभ्यामाग्नेये चरविभ्रमे ॥
चरुर्गुणास्थरुः स्थाली निर्वापस्तु तदाश्रितः॥२४॥
फलहानेर्न तत् किन्तु यावच्चोदितकर्म तत् ॥
द्रव्यादिरूपसंपत्तेरवाप्ता यागतार्थिकी॥२५॥

। रम्येदः म्नायते।वायव्यं श्वेतमालभेत भूति म इति।सौर्य
ारुं निर्वपेद् ब्रह्मवर्चसकाम इति च।तथा दर्शपूर्णमासयोरिदमा
नम्।ईषामालभेतेति।चतुरो मुष्टीन् निर्वपतीति च।ईषा शक
गतो लाङ्गल दण्डवद्दीर्घः काष्ठविशेषः।तस्या लम्भः स्पर्शः।
मेनं पूर्णं सगतमीषालम्भमनूद्य तस्यामालम्भ्यायामीषायां श्वे
। गुणो विधीयते।तस्य च श्वेतत्वस्य वायुना स्पृश्यमा
य ता सम्भवति।तथा चतुर्मुष्टिनिर्वपणमनूद्य चरुर्गुणो वि
। धीयते।चरुः स्थाली।सा च निर्वापस्याश्रयः।निरुप्तस्य हवि
। ष्येयतया सूर्यवत् प्रभासम्बन्धात् सौर्यत्वम्।भूतिब्रह्म
ावर्चसे फले च सर्वकामिकयोर्दर्शपूर्णमासयोः पूर्वसिद्धे एवानू
ाते।तस्माद् गुणविधी इत्येकः पूर्वपक्षः। न हि फलपदयोर्नि
ष्फलत्वं युक्तं तयोः सम्भवत् प्रयोजनयोश्च पक्षिकानुवादत्वमानर्थ
क्यं वायुक्तम्।तस्मात् गुणफलविशिष्टे कर्मान्तरे विधीयेते।तदापि
ागस्याश्रवणादालम्भनिर्वापयोरेव श्रवणाद्यावदुक्तकर्मवि
धिरिति द्वितीयः पूर्वपक्षः। श्वेतपशुचरुद्रव्ययोर्वायुसूर्यदे
ातयोश्च स्पष्टं प्रतीयमानतया रूपवतोर्यागयोरार्थिकयो
ापरित्यक्तुमशक्यत्वाद् द्रव्यदेवताविशिष्टयोर्यागयोर्विधिरभ्यु
ागन्तव्यः। भूतिकामो वायव्येन श्वेतेन पशुना यजेत।ब्रह्मव
र्चसकामः सौर्येण चरुणा यजेतेत्येवंविधोऽर्थः सिद्धो विधिः
द्रव्यदेवतासम्बन्धकल्पितस्य यागस्य लिङ्प्रत्ययेन कर्तव्य
ाविधावालम्भनिर्वापयोर्धात्वर्थयोः का गतिरिति चेत्। अ
ङ्गु इदृ। ब्रूमः।तत्प्राप्तिस्त्वार्थिकी।निर्वापालम्भावन्तरेण
तत्त द्रव्यागासिद्धेः।तस्माद् यागविधिरिति राद्धान्तः॥ ॥

लीवतमुत्सृजन्तीति। तत्र पर्य्यग्निकृतशब्देन संस्कृतपशुद्र-
व्यस्य पात्नीवतशब्देन पत्नीयुक्तत्वष्टृदेवतासम्बन्धस्य च प्रती-
यमानत्वादयं यागविधिः। एवं सति पर्य्यग्निकृत पात्नीवतशब्द-
योरव्यवहितान्वयो लभ्यते। सिद्धान्ती तु पर्य्यग्नि तमुत्सृजन्ती-
त्यन्वयं वाञ्छति। तदा व्यवहितान्वयो दुर्वारः। तस्माद्द्रव्य प-
शुवद्यागविधिरिति प्राप्ते ब्रूमः। अनारभ्याधीत स्ति
यत्वे प्रकृत प्रत्यभिज्ञा। इह लभ्यत्वेन प्रकृतः पशुः पात्नीव-
तशब्देन प्रत्यभिज्ञायते। तमनूद्य पर्य्यग्निकृतशब्दान्वितेनोत्-
सृजतीत्याख्यातेन पर्य्यग्निकरणाख्यो गुणो विधीयते। न च
प्र तिगतस्य पर्य्यग्निकरणस्य विकृतौ चोदकेन प्राप्त द-
नर्थकोऽयं विधिरिति वाच्यम्। उपरितनाङ्गनिवृत्तेर्विधिप्र-
जनत्वात्। नन्वेवं सति परिसंख्या स्यात्। सा च दोषत्रयदु ॥
स्वार्थत्यागोऽन्यार्थस्वीकारः प्राप्तबाधश्चेति त्रयो दो :। पर्य्य-
ग्निकरणवाक्ये स्वार्थो विधिस्त्यज्यते। अन्यार्थो निषेधः स्वी-
क्रियते। चोदकप्राप्तान्युपरितनाङ्गानि बाध्येरन्। मैवम्। पर्य्य-
ग्निकरणोत्तरभावीन्यङ्गानि नानुष्ठीयन्त इत्येतस्याः परिसंख्या-
अनङ्गीकारात्। कथं तर्हि तन्निवृत्तिः। आर्थिकीति ब्रूमः।
चोदकप्रवृत्तेः प्रागेवायं विधिः प्रवर्त्तते। प्रत्यक्षोपदेशस्य शी-
घ्रबुद्धिजनकत्वात्कल्प्यातिदेशात् प्रबलत्वात्। त स्युप-
दिष्टे वाङ्गे निराकाङ्क्षायां विकृतौ चोदकस्याप्रवृत्त्यैवोपरित-
नान्यङ्गानि न प्राप्यन्ते। न चानेन न्यायेन पर्य्यग्निकरणात् प्रा-
चीनानामप्यप्राप्तिरिति वाच्यम्। विधीयमानस्य पर्य्यग्नि -
करणस्य नूतनत्वे सत्युपकारकल्पनापत्त्या प्र तौ यत् क्लृप्तो-
प रं पर्य्यग्निकरणं तदवस्थापन्नस्यै त्र धेयत्वात्।
तौ च प्राचीनाङ्गानन्तरभावित एवोपकारः क्लृप्त इत्यः पि द-
शस्यैव विधानात् पर्य्यग्निकरणान्ताङ्गरीतिः सिध्यति। एवं च।
सत्युत्सृजतीत्याख्यातेन यथोक्तपर्य्यग्निकरणविधावर्थसिद्ध उ-
परितनाङ्गोत्सर्गो यानुवाद्यते। तदेवमत्र गु विधिः॥ ५॥

॥नव धिकार् मारचयति॥
यद्दाभ्यं गृही ति गृह्णान्यंशुमि द्वयम्॥
यद्व गो गुणो गः दद्याभ्यां मतः॥२३॥
ग्रहयोरेव म दानन्तर्याद्विधि ः॥
गुणोऽनस्तस्य न ज्योतिष्टो भि मि ॥२३॥
अनारभ्य श्रूयते।एष वै हवि ह यजति ऽदाभ्यं गृही ।
सोमाय यजत इति।परा एत यः ए योंऽशुं गृह्णा
तीति च।न दाभ्यशब्दस्य ज्योतिरादिवदपूर्वनामत्वात् न म
को गो यजत द्व नेन विधीयते। शुमित्यत्र यजतेर
श्रवणेऽपि नामविशेषबलादेः पूर्वयागविधिः।नचात्र द्रव्यदेव
तयोरभावः।ग्रहणलिङ्गेन ज्योतिष्टोमवि ति वगतो तदीय
विध्यन्तातिदेशेन ततसिद्धेरिति प्राप्ते ब्रूमः।भवत्वदाभ्यांशुश
ब्दयोर्नामत्वम्।ते च नामनी ग्रहयोरेव स्याताम्।न तु यागयोः
।गृहीत्वेति शब्द नन्तरमेव पाठात्।यजतिस्तु वहितः।
तादृशोऽपि यजिरंशु के नास्ति।तस्माद् ग्रहयोरे त्र विधिः
।ग्रहणं च ज्योतिष्टोमगतस्य सोमरसस्य संस्काररूपो गुणः।
ऐन्द्र य दिग्रहणास न त।यद्यप्यत्र न प नो ज्योति
ष्टोमस्त पि तत्सम्बन्धिग्रहणद्वारा काज्ज्योतिष्टोम
गामित्वम्।अत एव सो यादाभ्यं गृहीत्वेति निर्दि ते।अथ
तैत्तिरी णां य ण्डेष प्रपाठके प्र रणे विनियो
जक द्दष्ट म्।तस्माज्ज्योतिष्टोमे गुणविधिः॥
॥दश धिकरण रचयति॥
ग्निं चिनुत द्र त्र गो यजिः॥
लिङ्गेन य म द्यजि दतः॥२४॥
रू द्र मितद्धेतुर् न तिः॥
ःसं ते वहावग्नि मो धी ते॥२५॥
य एवं विद्वानग्निं चिनुत इत्येवं श्रूयते।अ नोऽग्निमग्निष्टोमे
नानुयजति।तमुक्थ्ये न तं ड्शिना तम रात्रेरो दि त्र

ग्निशब्दो यागवाची। स्तोत्रशस्त्रादेः क्रतुलिङ्गस्य श्रूयमाणत्वात्।
तच्च लिङ्गमेव श्रूयते। अग्नेः स्तोत्रमग्नेः शस्त्र मिति। षडुपसदो
ग्नेश्चित्यस्य भवन्तीति च। यदि लिङ्गं प्रापकापेक्षम्। नर्हि यजिना
तदनुवादः प्रापकोस्तु। अग्निमग्निष्टोमं नानुयजतीत्य।
तस्मिन् वाक्येऽग्निं यजतीति यजिसामानाधिकरण्याद् पांशु।
यजतीतिवद् यागनामत्वम्। अयोच्येत। अनुशब्दस्याग्निशब्दे
त्व द् यज्यन्वयोऽग्निष्टोमस्येति। तथाप्यग्नेः पुरोयजने सत्य
ग्निष्टोमस्यानुयजनं सम्भवति। देवदत्तमनुगच्छति यज्ञद।
त इत्यत्र देवदत्ते पुरोगमनदर्शनात्। तस्मादग्निं चिनुत इ
त्यत्राग्निनामको याग आख्यातेन विधीयते। चिनोति त्विष्ट
काभिरग्निं चिनुत इति वाक्य प्राप्तस्य चयनस्य सोमयाग।
विकृतित्वप्राप्तस्य ग्रहसमुदायस्येवानुवाद इति प्राप्ते ब्रूमः।
अग्निशब्दो रूढ्या वह्निद्रव्यमाचष्टे। रूढिश्च क्रमतया लिङ्गा।
द्विकल्प्याद् याग वाचित्वाद् बलीयसीति न यागनामत्वमा न
चात्र यागरूपमस्ति। द्रव्यदेवतयोरसिद्धेः॥ अतोऽग्निमादधी।
ते त्व धानवदग्निं चिनुत इत्युक्तं चयनमग्निद्रव्यसंस्कारः॥
न च संस्कृतस्य नियोगाभावः। अग्निमग्निष्टोमेन यजत इत्या
दि कैरग्निष्टोमादौ विनियोगात्। न तस ्रविधिः॥

॥ एकादशाधिकरणमारचयति ॥

मासं जुहोत्यग्निहोत्रं गुणोऽन्यत् कर्म वा गुणः॥
अनूद्य प्राप्तकर्मात्र मासोऽप्राप्तो विधीयते॥२६॥
उपसद्भिश्चरित्वेति नित्ये तासामसम्भवात्॥
अनेकस्या विधेश्चान्यत् कर्मप्र रणान्तरात्॥२७॥

कुण्डपायि मयने श्रूयते। मासमग्निहोत्रं जुहोति। संदर्श
पूर्णमासाभ्यां यजेतेति। अत्र प्राप्तं नित्याग्निहोत्रमनूद्य मास
लक्षणो गुणोऽप्राप्तत्वाद्विधीयत इति चेत्। मैवम्। किं मास।
एव विधीयत उतोपसद्भिश्चरित्वेत्युपसदोऽपि। नाद्यः॥
उपसदामपि नि ग्निहोत्र ग्निरहितानां त्वन्मते विधातव्यत्वा
त्। न द्वितीयः। प्राप्ते कर्मण्यनेकगुण विधौ वाक्यभेदापत्तेः।

ननु मा भूत् तर्हि गुणविधिः। कर्मान्तरत्वे किं प्रमाणमिति चे
त्प्र    रणान्तरमिति ब्रूमः। न ह्यत्र नित्याग्निहोत्रस्य प्रकर
णम्। असंनिहित    त्। अयनं त्वेतत् प्रकरणम्। अयनमात्र
स्याधीन   त्।    तर्हि नि    ग्निहोत्रे गुणविधिशङ्केति चेत्
प्रकरणस्यासमर्प    त्वेऽप्यग्निहोत्रशब्देनैतत्समर्पणादेषा
शङ्का     । सा च वा    भेदापत्त्या निराकृता। तथा सति
स्वतः सिद्धं प्रकरणभेदं निराकृत्य प्रकरणे    पादनेन गुण
वि    पयितुं प्रवृत्तस्याग्निहोत्रशब्दस्य शक्तौ निरुद्धायां तद
व    ः प्र    रणभेदो नि    ग्निहो    दिदं कर्म भिनत्ति। अग्निहो
त्रशब्दो धर्मा    देशार्थ इति सप्तमे वक्ष्यते। ननूपसत्त्वासा
भ्यां विशिष्टमिदं    र्म विधीयते। ततो वाजिनन्यायेन गुण
भेदात् कर्मभेदः। न प्रकरणभेदादिति चेत्। न। वैषम्यात्। उपा
देयत    धेयो गुणो    जिनम्। स    नुपादेय द्रव्यैकदे
शत्वम्। द्रव्यत्वेन रूपान्त र्गतं वाजिनम्। मासोन तथेत्यपरं
वैषम्यम्। परमार्थतस्त्वत्र प्रथमतरप्रतीतेन प्रकरणभेदे
न सिद्धं कर्मभेदं गुणभेद उपोद्बलयति। ततः प्रकरणान्तर
मे    त्र भेदहेतुः॥    द्वादशाधिकरणमारचयति॥    ॥

अष्टाकपालमाग्नेयं रुक्कामः प्राकृतं फलम्॥
मान्यद्वा फलभा    त्॥ पूर्वन्यायाप्रवेशनात्॥२८॥
भूद्गि    प्रकरणं कर्मान्तरमसंनिधेः॥
अ    रस्याधीनमेतद्रूपं त्वन्यूनमीक्षते॥२९॥

रस्य अयने। आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इति
। रु    तेज    मः। अत्रेष्टीनां प्र    तिभूतदर्शपूर्णमास
गतं    ये    मनूद्य तत्र तेजस्कामरूपं फलं विधीयते
। कुतः।    येयफलसम्बन्धस्य भासमानत्वात्। न चा
पूर्वो    ग्निहोत्रन्यायेन कर्मान्तरं    म्। वैषम्यात्। तत्रा
यनमात्र    धीनं    दत्तिप्रकरणान्तरत्वम्। इह त्वनारभ्याधी
तत्वेन प्रकरणमेव नास्ति। कुतोऽप्रकरणान्तरत्वम्॥

विधिरित्यवश्यमभ्युपेयम्। तत्र प्रकरणिनो दर्शादेः पूर्वविहितस्यै
वैभिर्वाक्यैः पुनर्विधाने समिधो यजतीत्यादिवदभ्यासादेव कर्मभे
द इति प्राप्ते ब्रूमः। देशादीनामविधेयत्वेऽपि हितकर्मणा सह।
तेषां सम्बन्धो विधीयताम्। स च कर्मवत् पूर्वं न विहित इत्यप्रा
प्तत्वाद्विधिमर्हति। यदुक्तमुपादानविधिशब्दौ पर्य्यायाविति तन्ना
दरस्तत्। अप्रवृत्तप्रवर्त्तनं विधानम्। तत् पुरुषविषयः शब्दव्यापा
रः। अननुष्ठितस्यानुष्ठानमुपादानम्। तच्च कर्मविषयः पुरुषा
व्यापार इति महान् भेदः। योऽपि दर्शादीनां पुनर्विधिः सोऽपि दे
शादिसम्बन्धं विधातुं कर्मानुवाद इति न कर्मभेदमावहति। स
मिधो यजतीत्यादौ विधेयगुणान्तराभावेनानुवादासम्भवात्॥
पुनर्विधानं भेदहेतुरिति वैषम्यम्॥

॥चतुर्दशाधिकरणमारचयति॥

दर्शपूर्णमासप्रोक्त आग्नेयः केवलोऽप्यसौ॥
दर्शे यदिति वाक्याभ्यां सोऽन्यद्वानुवादगीः॥३३॥
अभ्यासादन्यकर्मत्वं दर्शेष्टौ द्विः प्रयुज्यताम्॥
एकत्वप्रत्यभिज्ञानादनूक्तैन्द्राग्नसंस्तुतिः॥३४॥

यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती
ति वाक्यद्वये विहितम्। तदाग्नेयोऽष्टाकपालोऽमावास्यायां भव
तीत्येकस्मिन् काले पुनर्विहितम्। तत्राविशेषपुनःश्रुतिलक्ष
णेनाभ्यासेन प्रयाजानामिव भेदः। तथा सत्याग्नेययागस्य दर्श
काले द्विः प्रयोग इति चेन्न। प्रत्यभिज्ञानादाग्नेयस्यैकत्वे स
त्येककालवाक्यस्यानुवादकत्वात्। न चानुवादो व्यर्थः। विधे
यैन्द्राग्नस्तुत्यर्थत्वात्। यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भ
वति तथापि न केवलेनाग्निना साधुर्भवति। इन्द्रसहितोऽग्निः
समीचीनतरः। तस्मादैन्द्राग्नः कर्त्तव्य इति विधेयस्तुतिः। प्र
योजनवैषम्यं तूक्तमेवानुसन्धेयम्॥ ॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे द्वि
तीयाध्यायस्य तृतीयः पादः॥ ॥

चतुर्थपादस्य प्रथ  धिकरणमारचयति॥
यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा॥
कालत्वात् कर्मधर्मोऽतः  भ्यासकः प्रयुज्य  म्॥१॥
नकालो जीवनं तेन निमित्तप्रविभागतः॥
भ्यप्रयोगो भिन्नः स्याद् यावज्जीवप्रयोगतः॥२॥

बह्वृच ब्राह्मणे श्रूयते। यावज्जीवमग्निहोत्रं जुहोतीति तत्र। यावज्जीवशब्दो मरणावधिकालपरः। तत् कालसम्बन्धश्च प्रकृते काम्याग्निहोत्रे पूर्वमप्राप्तत्वाज्जुहोतीत्यनूदिते  र्मणि विधीयते। न  तत्यस्य वाक्यस्य नित्यप्रयोगविधायक  त्वेन । क्यान्तरविहितः काम्यप्रयोग एक एवाग्निहोत्रस्य पर्यवस्यति। स च  भ्यप्रयोगोऽभ्यसितव्यः। म  दनुष्ठानस्याग्निहोत्रं जुहुयात्। स्वर्ग  म इत्यनेनैव सिद्धत्वात्। यावज्जीवमित्य  । त्वविधेर्वैयर्थ्यप्रसङ्गात्। तस्मादयं काम्यकर्मणोऽभ्याससिद्धये कालरूपधर्मविधिरिति प्राप्ते ब्रूमः। यावज्जीवशब्दो न काल वाचकः। किन्तु लक्षकः। वाच्यार्थस्तु कृत्स्नजीवनम्। —— —— । न च जीवनं कर्मधर्मत्वेन वि  तुं श  मं। न  पुरुषधर्म  त। तस्य पुरुषधर्मं निमित्तो  त्याग्निहोत्रप्रयोगो विधीयते। न चात्र कर्मभेदः। तद्धेतूनां शब्दान्तरादीनामभात्। न चाभ्यासस्तद्धेतुः। निमित्तविशेषसद्भावेनाविशेषपुनःश्रुतेरभावात्। अतः प्रयोगभेदः पर्यवस्यति। जीवन  निमित्त  त। सति निमित्ते नैमित्तिकस्यावश्यं  नित्यत्वमर्थसिद्धम्। न च जीवननैरन्तर्येण प्रयोगनैरन्तर्यापत्तिः। सायं  तःकालयोर्विहितत्वात्। तस्माज्जीवनस्य पुरुषधर्म  न्नित्य  भ्यप्रयोगो भिन्नौ॥ ॥ द्वितीयाधिकरणमारचयति॥ ॥ ॥

शाखाभेदात् कर्मभेदो न वा कर्मात्र भिद्यते॥
दृष्टं काठकनामादि बहुभेद  रणम्॥३॥
ग्रन्थद्वारादिनाम्न्येते युज्यन्ते भेदहेतवः॥
रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते॥४॥

काठककाण्वमाध्यन्दिनतैत्तिरीयादिशाखासु दर्शपूर्णमासा क
र्माम्नातम्। तत्र शाखाभेदात् कर्म भिद्यते। कुतः। भेदकारणानां ना
मभेदादीनां ब लमुपलम्भात्। काठककाण्वादिको नामभेदः।
रीरीवा न्यधीयानाः केचिच्छाखिनो भूमौ। भोजन चर
न्ति। शाखान्तराध्यायिनो नाचरन्तीति धर्मभेदः। एकस्यां शाखा
यामधीता इषे त्वे दयो मन्त्राः पलाशशाखाच्छेदादयः क्रिया
श्च शाखान्तरेऽप्यधीयन्त इति पुनरुक्तिः। एवमशक्यादयोऽभे
दहेतव उदाहार्य्याः। न ल्पायुषा मनुष्येण सर्वशाखाध्ययन
पूर्वकं कर्मानु नं कर्तुं शक्यम्। तस्माच्छाखाभेदेन कर्मभेद
इति प्राप्ते ब्रूमः। रूपाद्यभेदादेकं कर्म। आग्नेयाष्टाकपालादियाग
रूपं यदेवैकस्यां शाखायां तदेवान्यत्राप्युपलभ्यते। दर्शपूर्णमा
साभ्यां यजेतेति यागरूपः पुरुषव्यापारश्चैकविधः। दर्शपूर्णमा
साविति कर्मनामाप्येकम्। स्वर्गकाम इति फलसम्बन्धोऽप्येकः।
तस्मादभिन्नं कर्म। पूर्वपक्षहेतवस्त्वन्यथा सङ्गच्छन्ते। ठ
दिकं ज्योति रादिवन्न कर्मनाम। काठकेन यजेतेत्यश्रवणात्।
काठ मधीत इति प्रयोगाद् ग्रन्थनामेत्यवगन्तव्यम्। भूभो
जनादिरध्ययनधर्मः। पुनरुक्तिरध्येतृभेदा दु नि
यु पि शाखान्तरस्योपसंहारः येन कर्मानु तुं शक्यते। त
स्मादन्यथासिद्धरूपप्रत्यभिज्ञानाच्छाखाभेदेऽपि कर्म न भि न्नं॥

इति माधवीये जैमिनीय यमालाविस्तरे
द्वितीयाध्यायस्य चतुर्थः पादः॥

॥ समाप्तश्च द्वितीयोऽध्यायः॥

## तृतीयोऽध्यायः॥

द्वितीये कर्मणां भेदे सिद्धे भिन्नक्रियास्वयम्॥
वृत्तुतस्मिनः शेषशेषिभावोऽतोऽत्राभिधीयते॥
॥ अनेन द्वितीय तृतीययोरध्याययोः पौर्वापर्य्यं निरूपितम्॥
॥ तृतीयाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति॥
अशाब्दो शेषता शाब्दी वा न शाब्द्यप्रतीतितः॥
क्रियाकारकसंसर्गमात्रे व्युत्पत्तिसम्भवात्॥ १॥
गुणप्रधानभावेन संसर्गेऽन्तर्भवत्यसौ॥
व्युत्पत्तिसम्भवात्तत्र शाब्दता स्यात्क्रियादिवत्॥ २॥
यदिदमस्मिंस्तृतीयाध्याये प्रतिपादितं शेषत्वं तच्छाब्दम्। कुतः। केनापि शब्देन शेषत्वस्याप्रतीयमानत्वात्। व्युत्पन्नो हि शब्दः। प्रत्यायकः। व्युत्पत्तिश्च न शेषशेषिभावे क्वचिद्दृष्टा। लोके सर्वत्र क्रियाकारकान्वयस्यैव व्युत्पत्तिप्रयोजकत्वदर्शनात्। अतः शेषता या अशाब्दत्वाद्नायमध्याय आरम्भणीय इति चेत्। मैवम्। अन्वये शेषशेषिभावस्यान्तर्भावात्। नहि गुणप्रधानभावमन्तरेणान्वयः सम्भवति। द्वयोर्गुणयोः परस्पराकाङ्क्षारहितत्वेनान्वययोग्यत्वाभावात्। एवं द्वयोः प्रधानयोरपि। अतो व्युत्पत्तिसम्भवात् क्रियाकारकतदन्वयो यथा शाब्दः तथा तदन्वयान्तर्गतः शेषशेषिभावोऽपि शाब्दः। तस्मादयमध्याय आरम्भणीयः॥ ॥ द्वितीयाधिकर मारचति॥ ॥
स्वरूपहेतू न स्तोऽत्र स्तो वा नैवानिरूपणात्॥
पारार्थ्यं शेषता हेतूरूपं तेनोपलक्षितम्॥ ३॥
न तावदत्र शेषत्वस्य स्वरूपं निरूपयितुं शक्यते। तथा हि। शेषत्वं नाम किमविनाभूतत्वं प्रयोज्यत्वं वाविध्यन्तविहितत्वं वा। नाद्यः। षड्यागानामविनाभूतानां परस्परशेषत्वप्रसङ्गात्। न द्वितीयः। पुरोडाशकपालेन तुषानुपवपतीत्यत्र तुषोप पं प्रति शेषस्यापि कपालस्य तत्प्रयोज्य भावात्। न तृतीयः।

इत्यादिविहितस्यफलस्यशक्यत्वाच्छेदस्य सत्यपि शेषत्वे विध्यन्तर्विहितत्वाभावात्। तस्मान्नास्ति शेषतायाः स्वरूपम्। पि हेतुरस्ति। विमतः शेषः। एवंत्वादिति कस्यचिद्धेतोरनिरूपणादिति। प्राप्ते ब्रूमः। विमतः प्रयाजादिः। शेषः। परार्थत्वात्। भृदिवदिति हेतुः सुनिरूपितः। अविनाभूतत्वादीनां लक्षणानां दुष्टत्वेऽपि परार्थः शेष इति। लक्षणस्यादुष्टत्वात्। तेन लक्षितआकारः स्वरूपम्। न च पारार्थ्यस्यैव हेतुत्वे लक्षणत्वे च दुर्घटम्। आकारभेदेन तद्भेदात्। दृष्टान्ते गृहीतव्याप्तिं सहायीकृत्यबोधक आकारो हेतुः इतरव्यावृत्त्या बोधक कारो लक्षणम्। तस्माच्छेषतायाः हेतुस्वरूपेविद्यते॥ ॥

॥तृतीयाधिकरणमारचयति ॥

किंद्रव्यगुणसंस्कारमात्रं शेषोऽथवा फलम्॥
पुमान्कर्म च पक्षो द्वावाद्यो मतभेदतः ॥ ४ ॥
शेषत्वमुप रित्वे द्व्यादावाह वादरिः ॥
पारार्थ्ये शेषता तच्च सर्वेष्वस्तीति जैमिनिः ॥ ५ ॥

स्फ्यकपालादिकं द्रव्यम्। अरुणैमादिको गुणः घातप्रोक्षणादिकः संस्कारः। एतेषु त्रिष्वेव शेषत्वं स्वर्गः फलम्। तत्कामी पुरुषः दर्शपूर्ण सौ कर्म। न हि फलादीनां त्रया शेषत्वमस्ति। उप रितस्य शेषत्वलक्षणस्य लादिष्वभावादिति दरेर्मतम्। पारार्थ्यं तल्लक्षणमभिप्रेत्य फलादयोऽपि शेषा इति जैमिनेर्मतम्। तथा च त्रीणि सूत्राणि पठ्यन्ते। कर्माण्यपि जैमिनिः फलार्थत्वात्। फलञ्च पुरुषार्थ त्। पुरुषश्च कर्मार्थ दिति। तत्रोपकारित्वमति सम्। प्रधानभूतोऽपि स्वामिनि गर्भदासोपकारित्वदर्शनात्। तस्माज्जैमिनिमतमेव मुख्यसिद्धान्तः॥

॥ चतुर्थाधिकरणमारचयति ॥

श्रुता व्री ज्यसान्नाय्य धर्माः साङ्कर्ययगामिनः॥
व्यवस्थि साङ्कर्यं फलापूर्वेण सङ्गतेः॥ ६॥
अवान्तरापूर्वसत्त्वात्साक्षात्तेनैव सङ्गतेः ॥

